# मधुरवाणी

श्रीसुभाषांकः



प्रधान सम्पादकः
पं. गलगलीरामाचार्यः
संस्कृतसाहित्यरत्नम्

सम्पादकः
पं. मुलीश्रीनिवासाचार्यः
संस्कृतसाहित्यभूषणम्

सहसम्पादकः
पं. गलगलीपण्ढरीनाथाचार्यः
सं. सा. सुधाकरः

---

वार्षिकं मूल्यम् ] रूप्यकचतुष्टयम्

---

## अनुक्रमणिका

॥ श्रीशः शरणम् ॥



# मधुरवाणी.

सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१२ वर्षे ] १८६८ शकस्य [ १ सञ्चिका:

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णःपटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

श्रीशः शरणम्

## नव्यवत्सरारम्भः

एकादशवत्सरदुर्गमतीत्य द्वादशवर्षोपवनसीमानमुपस्पृष्टवती कथमपि मधुरवाणीति समाश्वसिति नश्चेतः । धनतो धान्यतः सामग्रीतः साहाय्यतश्च सर्वथा प्रतिकूलेऽस्मिन् समये एकं मासमतिक्रम्य अपरमासस्पर्शो नाम-मधुरवाण्याः साहसिकस्य हिमालयस्य गौरीशङ्करशिखरारोहणमिव महान्तमेवोप-जनयत्यायासम् । महतीमेव व्यथामापादयति । मुद्रणालयानानुकूल्येन किं शोचनीयम्, किंवा वाचकजनौदासीन्येन सन्तप्तव्यम्, उत महर्घताकृते वा किं शिला भेदनीया, अक्षरयोजकानधिगमेन अश्रु मोचनीयम् किमपि न विद्मो वयम् । नियतसमये मधुरवाणीं प्रकाश्य सुरवाणीसेवया वाचकजनमन-

स्तोषणाय किं वा वाऽनुष्ठेयमिति न वेत्ति चेतः । संप्रार्थिताः मुद्रणालयाधियाः, अनुनीताः वर्णयोजकाः, याचिताश्च संस्कृतप्रणयिनः श्रीलाः । किन्तु न केषांचिदपि चितं विद्रुतं करुणया मधुरवाण्याम् । अस्यामवस्थायां किमस्माभिः करणीयं परायत्तैरकिञ्चनैः । स्वकीयं संस्कृतप्रणयिभिर्दत्तं वा पर्याप्तं धनमभविष्यत्तर्हि नैतां दशामन्वभविष्यन्मधुरवाणी दयनीयाम् । ईदृश्यां सर्वथा प्रतिकूलायामप्यवस्थायां मधुरवाणी जीवति असमये वा प्रकाशयात्मानममरभारतीं परिचरति, प्रदत्ते च ग्राहकजनदत्तधनप्रतिफलमविकलं, प्रोत्सहते च समयानुकूल्ये द्विगुणकार्यकरणेचेत्येव सन्तोष्टव्यं वाचकमहाशयैरुदारचेतस्कैः । इतः परं यावच्छक्यं प्रयत्यतं एवास्माभिः समये मधुरवाण्याः प्रकाशने मुद्रणालयाधिपं वर्णयोजकांश्चानुनीय । तथापि यदि कालविलम्बः स्यात्क्षन्तव्यमेवावश्यं वाचकैः । अव्याहतं प्रेम चिरं प्रदर्शनीयं मधुरवाण्यामित्यभ्यर्थ्यतेऽस्माभिः ।

---

# ' चिरात्प्रज्वालितं तेजः '

ले.— गलगली रामाचार्यः

कौरव-पाण्डवसमरदावानले तत्कालीनेषु आतरुणाद् आवृद्धं सर्वेष्वपि वीरेषु सममेव आहुतीभूतेषु अविच्छिन्नं परम्परागतं समुज्ज्वलं विदेशीयरावणादिवैरिसमाक्रमणनिवारणदक्षं कंसादिस्वदेशीयनीचदुराचारोपशमनक्षमं क्षात्रं तेजः चिराय विनष्टप्रायमासीत् । तदनु किञ्चित् समुन्मिषितमपि क्षत्रियेष्वन्तिमेन नन्देन सममयासीत्समूलमन्तम् । स्वावमानासहिष्णुना परमकोपनस्वभावेन-परिणामे दूरदृष्टिविरहितेन आर्यचाणक्येन प्रतिकारैकदृष्ट्या परकीयाभियोगनिराकरणसमर्थं स्वदेशसंरक्षणक्षमं क्षत्रकुलं समूलमुन्मूलितम् । ' ग्रेन नन्दान्तं क्षत्रियकुलम् ' इति स्मर्यते । चाणक्येन न केवलं क्षत्रकुलं विनाशितं भारते,

समुत्कटा वीरवृत्तिरपि रसातलं नीता । उत्पथं प्रतिपन्नेषु राजसु यथा तच्छासनं ब्राह्मणैर्विधेयम् तथा क्षत्रियवंशरक्षणद्वारा वीरवृत्तिस्थिरीकरणमपि अवश्य-मापादनीयम् । परं भारतस्य भवितव्यतया तादृशी मतिर्नोत्पन्ना सकलविद्या-पारङ्गतस्य राजनीतिशास्त्रप्रणयनेन पाश्चात्यपण्डितैरपि स्तूयमानबुद्धिवैभवस्य राजकारणचतुरस्यापि आर्यचाणक्यस्य अमर्षणप्रकृत्या । तेन नष्टवीरवृत्तौ भारते निस्सत्वतया परकीयाक्रमणस्यावकाशो लब्धः । तदनु पुरतस्तैर्ब्राह्मणैः पुन-र्वीरवृत्तिस्थिरीकरणाय स्वयं वा क्षत्रवृत्तिरवलम्बनीयाऽऽसीद् द्रोणाश्वत्थाम–कृपादि-भिरिव । अथवा पुनरन्यद्राजकुलं क्षत्रियत्वेन निष्पादनीयं सम्माननीयमासीत् । परमार्थैकदृष्ट्या परलोकसुखप्रवणचेतस्कतया जगति नश्वरताबुध्या स्वयं क्षात्रवृत्तिर्नावलम्बिता । 'कलावाद्यन्तयोः स्थितिः' इतिकाचित्कवचनमनुसृत्य राजन्यत्वेन न किमपि राजकुलं समुत्तेजितम् । तस्य दुष्फलं पुरस्तनैर्भारतीयै-रनुभूतम्, इदानीमपि अनुभूयते । यदि तदानीन्तनैस्तेजस्विभिर्विप्रवरैः यदि क्षत्रियकुलमुद्धृतमभविष्यत् वीरवृत्तिसंरक्षणमकरिष्यत् तर्हि भारतस्य इतिहास अन्य एवाभविष्यत्समुज्ज्वलः। ततश्च सर्वशून्यवादिभिस्सन्यासधर्मैकप्रवणैर्हि-बौद्धैरहिंसाधर्मप्रचारेण सामान्यप्रजास्वपि किञ्चिदवशिष्टा वीरवृत्तिः समूल-मुच्छिदिता । तदेवं प्रथितानन्यसामान्यपराक्रमेऽपि भारते दुर्बलीभूते परकीया-क्रमणं सहजमेव । निश्शङ्कं प्राविशन् साहसिकाः विदेशीयाः । उदपादयंश्च कलहबीजम् । अजनयंश्च राजसु मिथोभेदम् आत्मसादकुर्वंश्च क्रमेणैकैकशः प्रान्तम् । अन्ततश्चालभन्त सार्वभौमताम् । तदनु दृढमूलाश्च मानैश्वर्योच्चपद-दानादिना वशीकृतलोभिवीरजना यथेच्छमप्रतिबन्धमन्वभुञ्जन्निमां सुवर्णभूमिं भारतरत्नगर्भां स्वकीयामिव । अपाहरंश्चामूल्यरत्नानि ललनारत्नैः समम् । न्यपीडयंश्च तपस्विनीः प्रजाः । बलादाहरंश्चान्यायेन शिरःकरादीनि (डोयीपट्टी) । व्यध्वंसयन्देवालयान् । अभञ्जयंश्च देवमूर्तीः । अमथन्धर्मम् । अवासादयन् संस्कृतिम् । अदहन् संस्कृतग्रन्थरत्नभाण्डागारान् । अमन्यन्त द्विजशिखामग्निशिखामिव । अजानन् यज्ञोपवीतं यमपाशमिव । येनतदुच्छेदाय बहुधा प्रायतन्त । अभ्रंशयंश्च शीलं कुलीनानां ललनानाम् । अदीक्षयंश्च हठादेक-

लक्षशो जनान् निजधर्मे । तदानीमेवासेवन्तस्ते इदानीन्तननवखली ( नौखाली ) यात्याचाररतरोर्वीजम् । वीरवृत्तिविरहिते स्वाभिमानविधुरे मिथःकलहायमाने च दैवदुर्विपाकग्रस्ते भारते सर्वं सुशकमेवासीत्तेषाम् । न कोऽपि वीरस्तदासी-द्भारतीयः, यःखलु सरभसं हस्तं प्रगृह्य विचारयेद्धैर्येण । येन तैर्भारतनन्दनवने-यथेच्छं चरितं संचरितं कृतं च दुश्चरितमविशङ्कमभयलेशम् । तदसहमानाः केचन स्वाभिमानिनः प्रतापसिंहप्रभृतयो महानुभावाः सिंहप्रतापास्तन्निरोधाय तदुच्छेदाय च प्राणपणेनाऽपि प्रायतन्त कृतसर्वस्वत्यागाः समनुभूय दुस्सह-क्लेशसहस्राणि । अग्निसादकुर्वंश्च साध्वीशिरोमणीः स्वरमणीः । परं स्वदेश-बन्धुजनानामानुकूल्यविरहेण प्रत्युत प्रातिकूल्येन च तेषां सर्वोऽपि महीयान् चिरस्मरणीयः प्रयासो नद्याः प्रवाहे तिन्त्रिणीफलक्षालनमिव विफलता-मेवागमत् ।

तदनु केषुचिच्छतकेषु व्यतीतेषु तदेतद्दुस्सहपरिस्थितिमन्वालोच्य क्षात्रवृत्तिसमुत्तेजनमन्तरा भारतस्य नैव समुन्नतेः प्रत्याशेति निश्चित्य कर्णाटके विजयनगरे श्रीमाधवाचार्यनामा ( तदनुविद्यारण्य इतिप्रथितः ) तपस्वी तेजस्वी महानुभावो विप्रकुलावतंसः कश्चित्कालं पारमार्थिकदृष्टिं पार्श्वतो निधाय जन-सेवैव जनार्दनसेवेति विज्ञाय भारते भारतीयसाम्राज्यस्थापनद्वारा आर्यधर्म—संस्कृति संरक्षणं परदास्यशृंखलाबद्धमातृभूबन्धमोचनमेव मोक्षसाधनं मन्वानः शूराग्रेसराभ्यां । 'हुक्क—बुक्क' नामभ्यां सोदराभ्यां क्षात्रवृत्तिदीक्षां प्रदाय साम्राज्यं प्रतिष्ठाप्य तयोः सचिवतां स्वयमङ्गीकृत्य भारतभूमात्रगौरवमसाधय-त्प्रावर्धयच्च । कतिपयशतकपर्यन्तं तेजस्वि तद्राज्यकुलं निजप्रतिष्ठां संरक्ष्य पुनरन्तःकलह—व्यसनमग्नतादिदोषैर्विलयमयासीत् ।

महाराष्ट्रेऽपि शिवप्रभुः क्षात्रवृत्तिमवलम्ब्य निस्सत्वमकरोद्वैरिबलम् । अपालयद्विनाशोन्मुखं भारतीयधर्मम् । जुगोप च रिपुजठरानले प्रवेश्यमाना गाः । तथा 'पेशवे' श्रीमद्भिरपि विप्रैर्भूपतिभिः क्षात्रं तेजः समुज्ज्वालितं कतिपयवत्सरं भारतयज्ञभूमौ । परं पुनरन्तर्भेदादिना तत्तेजाश्चिराय निर्वाण-दशामापद्यत ।

एवं परिस्थित्यां प्रथममेव भारते स्वार्थसाधनाय प्रविष्टैरनुकूलकालप्रतीक्षिभिर्विदेशीयैः पुनरात्मसात्कृतो भारतदेशः क्रमेण भेदनीतिचातुर्येणैव। वाणिज्यमिषेण लब्धचञ्चुप्रवेशा इमे धूर्ता भिक्षुपादप्रसारणन्यायेन मुसलप्रवेशमाधिगत्य समग्रभारतदेशस्याधिपत्यमवापुः। ततश्च क्रमेण स्वीयसाम्राज्यस्थिरीकरणाय आवश्यके जनदौर्बल्ये आपातरमणीयान् परिणामे विषोपमानुपायान्प्रायुञ्जन्त सफलान्। माण्डलिकनृपाणां संरक्षणव्याजेन तद्राज्ये निजसैन्यनिवेशेन तत्स्वातन्त्र्यमपाहरन्। शिक्षणव्याजेन प्राचीनसंस्कृति–धर्माभिमानं वीरभावनां चोदच्छिदन्नविदितमेव। मिथःकलहभयमिषेण शस्त्राण्याच्छिद्य क्वचित्कोणे लीनं क्षात्रं तेजः पुनराविर्भावशङ्कया समूलमुद्चाटयन्। संपन्नाः प्रजा राजकीयात्याचारप्रक्षुब्धाः कदाचिदत्याहितमाचरेयुरिति तासां द्रव्यशोषणमकुर्वन् त्रिविधैः शासनैः। एवं सुवर्णभूमिरिति प्रथितां भारतभूमिं स्मशानसमदशामापादयामासुः। एवं दुःस्थितिमापन्ने भारते नरके सुखस्येव विदेशराजपुरुषे प्रजावात्सल्यस्येव कुतः स्वाभिमानस्यावकाशः, कुतस्तरां वीरभावनायाः, कुतस्तमां क्षात्रतेजसः।

एवंस्थितेऽपि सप्तपञ्चाश (१८५७) दुत्तराष्टादशे ख्रिस्तशके सैनिकविद्रोहमिषेण किंचिदिव स्फुरितं भारतीयेषु क्षात्रं तेजः शरन्मेघेषु सौदामनीव। हन्तः तदपि। विलीनमचिरादेव। पुनर्भारतीयेषु नवचैतन्यमुत्पादयितुं लोकमान्यप्रभृतिभिः बहुधा पयतितम्। किञ्चिदिव सफलं जातम्। परम् महात्मन अहिंसामयेनान्दोलनेन जागृतेऽपि स्वाभिमाने समासादितायामपि कारावासादिकष्टसहिष्णुतायां सीमान्तगतेऽपि स्वार्थत्यागे 'शठं प्रति शाठ्यम्' इति भावनया समुद्दीप्यमानं स्वातन्त्र्यैकसाधनं क्षात्रं तेजः न केवलं नोत्तेजितम्, अपितु पुनरनुत्थानाय प्रस्वापितम्।

एवं क्षात्रतेजसोऽस्तमनेन सर्वत्र निराशामयान्धकारे प्रसृते, स्वातन्त्र्यमार्गेऽदृश्यमानेच भारतस्य सौभाग्येन वङ्गगगनाङ्गणे सुभासोद्दीपितश्चन्द्रः इव प्रादुरासीत् श्रीसुभाषचन्द्रः येन विनाशितः सर्वतो गाढान्धकारः, दर्शितश्च पूर्णस्वातन्त्र्यमार्गः। राष्ट्रीयसभाया मन्दगामिना चिरादपि पूर्णस्वातन्त्र्यप्रासादसोपानस्पर्शाक्षमेण अहिंसामयेनान्दोलनेन समुद्विग्नः ततो दूरीकृतः '**सुभाषचन्द्रबोस**' महाभागः। अहिंसान्दोलनेन मुग्धतया

कृतशीर्षान्दोलने भारते क्षात्रतेजस्समुत्तेजनमशक्यमिति मन्वाने। जागरूकाणां राजकीयपुरुषाणामक्षिषु धूलिं निक्षिप्य गुप्तं बहुप्रयासेन स्वदेशमतिक्रम्य विदेशे दूर–दूरस्थितान् स्वबान्धवान् संगमय्य स्वतंत्रसेनां निर्माय बहोः कालाद्विलीनं क्षात्रं तेजः वीरवृत्तिं च पुनः प्राज्वालयत्। प्रास्थापयच्च 'स्वतंत्रहिंदुस्थानसर्वकारम्। किंचित्समत्रं सोत्साहं प्रचलितेऽपि सत्सर्वकारे कालप्रतिकूलतया विलयं गतेऽपि एकदा **श्रीसुभाषचन्द्र**महाभागेन अनन्यसाध्यं प्रज्वालितं क्षात्रतेजः न कदापि शाम्येत्, समुद्दिष्टं संपूर्णं स्वातन्त्र्यं च संपादयेदित्यत्र न काऽपि विप्रतिपत्तिः। अचिरादेव विदेशात्समागत्य महाशयोऽयं स्वदेशेऽपि क्षात्रतेजः प्रज्वाल्य बहुकालान्नष्टं स्वातन्त्र्यनिधिं दर्शयेदेवेति दृढीयान् प्रत्ययः प्रजानाम्।

एवं कौरव–पाण्डवसमरेण समं विनाशपथमुपागतं पृथ्वीराज–प्रतापसिंहविद्यारण्य—शिवाजीप्रभृतिभिर्महाप्रतापशालिभिः मध्ये प्रदीपितमपि क्षात्रं तेजः पुनः प्रज्वालितं प्रतिकूलेऽपि काले इत्यहो भारतभूदेव्याः सौभाग्यम्। अहो साहसनिस्सीमता, अहो स्वातन्त्र्यैकनिष्ठा अहो स्वार्थ–स्वप्राणनिरपेक्षं स्वमातृभूसेवातत्परता। सर्वात्मनाऽलौकिकोऽयं महापुरुषो धन्यतमो मान्यतमोऽनुकरणीय चरितश्चादर्शभूतः।

---

# अहो! योषास्वपि पौरुषमुद्भावितं

## श्रीसुभाषचन्द्रेण

ले.—सुलोचनादेवी

स्त्रियो नाम गृहकार्यान्यकार्याक्षमाः, साहित्यादिकलाज्ञानस्याप्यनर्हाः, किमुतशस्त्रविद्यायाः केवलमुपभोगसाधनानि वस्तूनीति अधुनाऽपि भूयांसो मन्यन्ते। तैः प्रायो न श्रुतास्स्युः पुराणादिकथाः। श्रूयते च भागवते पारिजाततरुहरणप्रवृत्ते श्रीकृष्णे सत्यभामादेवी स्वयमेव शस्त्रमादाय पुरुहूतं जिगायेति। महाभारते क्लीबस्यापि पौरुषापादकं विदुला–पुत्रसंवादमनुवाच्य श्रुत्वा वा कस्य वा चेतसि नोत्पद्येत स्वाभिमानज्योतिः, कस्य वा शरीरं न

जायेत रोमाञ्चकञ्चुकितम्. कस्य वा नाडीषु न सञ्चरेन्नवचैतन्यम्, कस्य वा रुधिरमुष्णतामासाद्य चलविचलं न स्यात्, कस्य वा दक्षिणः करो न मुष्टीभवेत्स्वयम् कस्य वा पाणिर्न पुरःसरेच्छस्त्रग्रहणाय सति स्वस्य पशुभिन्नताज्ञाने मानवताप्रत्यये वेदेष्वपि श्रूयन्ते वीरभावनोद्भाविन्यो भामिनीभीमपराक्रमकथाः। परमिदानीं संस्कृतभाषाया अप्रचारेण च तादृशकथाश्रवणमेव दूरापेतम्। तेन यदा पुरुषेषु नवचैतन्यविरहः, पौरुषपराङ्मुखता, स्वाभिमानवैकल्यम्, वीरवृत्तिशून्यता, अवमानसहनाभ्यासः, अत्याचाराप्रतीकारः, प्रक्षोभाभावश्च तदा किं पुनः सीमन्तिनीषु। वीरताविरहे को वा भेदः सीमन्तिनीभ्यः सीमन्तालङ्कृतशिरसां मुण्डितश्मश्रुमुखानां पुरुषाणाम्। संस्कृतज्ञाने पुराणादिषु समुद्बोधकचरितश्रवणानुवाचनादिभिः समुत्पद्यते नराणां नारीणां वा चित्ते नवस्फूर्तिः। अतः पुनः पुनराघुष्यते मया संस्कृतमवश्यमभ्यसनीयं सर्वैः पुरुषैः स्त्रीभिश्च। अस्तु। इतिहासे केन वा न श्रुतं झांसीमहाराज्ञ्या लक्ष्म्या नाम, रोमांचकारि चरितं च। यया बाल्य एव सैनिकशिक्षणमधिगत्य पुरुषाणां लज्जावहं चैतन्योत्तेजकं कीदृशं शौर्यमाविष्कृत्य अजरामरकीर्तिसखी समालिङ्गितेति जानन्त्येव प्राथमिकशालाविद्यार्थिनोऽपि।

वैदेशिकानिरुपयोगिशिक्षणपरिणामवशात् पुरुषेष्विव योषित्स्वपि प्रवृद्धा भोगलालसा, समुत्पन्ना विवेकविधुरता, संजाता चानुकरणप्रियता समेधिता च मेधादुर्बलता, प्रकर्षं गता च शरीरे कार्याक्षमता, उदिता च चेतसि विवेचनासमर्थता, विनष्टः स्वाभिमानः, अस्तंगता वीरवृत्तिः, अवसन्नं नवचैतन्यम्, प्रध्वस्ता नूतनस्फूर्तिः, शान्ता स्वातन्त्र्यतृष्णा, अपक्रान्ता विजिगीषुता, निरस्ता निरालस्यता, अपसृता प्रतिक्रियाशक्तिः, दूरीभूता च दुरात्मनिर्दलननिष्ठता च।

तदेवं परिस्थित्यामपि अद्भुतसाहसकारिणा अनन्यसामान्यमान्यताभाजा असाधारणमेधाशक्तिना असदृशानिरतिशयधैर्यशालिना, अपूर्वक्रांतिकारिणा नव्यपथदर्शिना निरुपमस्वार्थत्यागेन स्वातंत्र्यसङ्ग्रामे पुरोगामिना **श्रीसुभाषचन्द्र**महाभागेन निभृतं सुकौशलं च परदेशं प्रस्थाय यथा पुरुषसैनिकान्निर्माय तेषु परुषतमं पौरुषमुद्भावितं, तथा सहस्राधिकान् स्त्रीसैनिकान् सज्जीकृत्य तास्वपि अभूतपूर्वा शौर्यवृत्तिरुत्पादिता। अपरा झांसीलक्ष्मीति विश्रुतायाः 'कॅप्टन्' लक्ष्म्या नाम केन वा भारतीयेन न श्रुतम्। या किल

सहस्राधिकानां स्त्रीसैनिकानां सेनापत्यमावहत् । सैनिकवर्गप्रवेशे श्रीसुभाषचन्द्रेणैकोऽवश्यपालनीयो नियमः कृतः—या किल स्वशरीररक्तेनैव नामोल्लिखितुं प्रभवति सैव सैन्यविभागे प्रवेष्टुमर्हति इति । तदा सहस्रशः सुकुमार्यः कुमार्यः, अमूढाः समूढाः सीमन्तिन्यश्च अहमहमिकया पुरस्सृत्य सानन्दं सस्फूर्तिकं सवीरावेशं सधैर्यं सप्राणानिरपेक्षं च करधृतच्छुरिकया क्षतात्स्वशरीरभागादविच्छिन्नरक्तधारया लेखनीमाप्लाव्य तया स्वमातृभूस्वातन्त्र्याय प्राणार्पणप्रतिज्ञाक्षराणि सुवाच्यानि हृदयोद्भावनापिशुनानि च समालेखयन् । अहो हिन्दुरमणीनां साहसम् । अहो स्वातन्त्र्योत्कटेच्छा आर्यकुटिलालकानाम् अहो वक्तृताकौशलं श्रीसुभाषचन्द्रमहोदयस्य । अहो परचेतोवशीकरणचातुर्यम् । भारते विद्यमानानां विदेशशिक्षणसंस्कारप्रभावेण गलितधैर्याणां चलितवीर्याणां स्खलितशूरचर्याणां विध्वस्तस्वाभिमानानाम् आपास्तस्वातन्त्र्यकांक्षाणां च पुरुषाणामपि कदाप्यसम्भावितं समराङ्गणसाहसं पौरुषं योषास्वपि समुन्मेषितं सुभाषचन्द्रेणेत्यनेनैव तस्य इतरासाधारणं महत्त्वं प्रतीयते । समयेऽनुकूले भारतीया भामिन्योऽपि पौरुषमुद्भावयितुं प्रभवन्तीति सुभाषसैनिकस्त्रीनिदर्शनेन स्फुटीभूतमिदानीम् । पाकिस्तानीयान्दोलनसमये नारीणामपि स्वप्राणरक्षणाय स्वप्राणेभ्योऽपि गरीयसः पातिव्रत्यस्य पालनाय च शस्त्रग्रहणं शस्त्रशिक्षणमत्यावश्यकमापतितम् । यदि नवखालीयाःकुलीना ललनाःशस्त्रविद्यामलप्स्यन् तर्हि नैवाभविष्यद्गर्हणीया शोचनीया रोमाञ्चकारिणी शीलभङ्गादिदशा । असहकारान्दोलने स्त्रीषु कारावासदुःखमनुभूतवतीष्वपि न वीरवृत्तिरङ्कुरिता । न पौरुषभावना समद्भूता । न वा शस्त्रग्रहणलालसा समुत्पन्ना । नापि प्रतीकारशक्तिः सञ्जाता । न च समुत्कटा प्रतिभटनार्भटी संघटिता । यन्मानिनीनां गौरवास्पदं सर्वस्वापितं शीलं, तद्रक्षणाय इदानीन्तनेऽत्याचारमये समये यत्पौरुषमत्यावश्यकमासीत् तदुद्भावितं स्वातन्त्र्यसंपादनोद्देशेन महापुरुषेण सुभाषचन्द्रबोसमहाशयेनेति चिरं कृतज्ञताभावोऽवलम्बनीयो मानिनीसमाजेन । सर्वाभिरपि स्वसर्वस्वशीलपालनार्थिभिर्भामिनीभिः सर्वदा तत्पौरुषज्योतिः संपाद्य समुज्ज्वाल्य च भारतकीर्तिः समुद्दीप्येति समाशास्यते ।

---

# श्रीमतः सुभाषचन्द्रस्य जीवनचरितम् ।

**एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ।**

विशाले आकाशे समुदितस्य अखिलस्यापि जगत एव सुनिर्मलैः कलासहस्रैः परमाल्हादकरस्य अमृतकिरणस्य चन्द्रस्य जन्म कदा बभूवेत्यावेदयितुमसमर्था अपि वयं सुगृहीतनाम्नः श्रीसुभाषचन्द्रबोसमहोदयस्य जन्म ( २३ ) त्रयोविंशे दिनांके तारके जानेवारीमासे १८९७ तमे ऐशवीयाब्दे चतुर्विंशतिमण्डलान्तर्वर्तिकोडालियाग्रामे समभूदिति निश्चयेन निवेदयामो वयम् । श्रीसुभाषचन्द्रस्य पिता **श्रीमान् रायबहादुर जानकीदासमहाभागः** जननी च धन्या अष्टपुत्रा श्रीमती सौभाग्यवती **प्रभावतीदेवी** । श्रीरायबहादुर जानकीदासमहोदयः उदारमतवादी सुसंस्कृतो विद्याप्रेमीचासीत् । सौ। प्रभावतीदेवी चापि धर्मशीला परोपकारनिरता भगवति भक्तिभावभरिता चाभूत् । एवमत्युत्तमयोर्भाग्यवतोः दम्पत्योः समुत्पन्नोयं वीरकुमारः खण्डत्रयगीतकीर्तिः यदि न भवेत्तर्हि एव आश्चर्यस्यास्पदम् । श्रीसुभाषचन्द्रस्य सहोदरा भ्रातरः सप्त भगिन्यश्च षट्संख्याः संति । भाग्यवतामेषामासामपि च नामान्येवम् । १ बॅ. सतीशचन्द्रः २ सुधीरचन्द्रः ३ डॉ. सुनीलचन्द्रः ४ नेताजी सुभाषचन्द्रः ५ श्रीशैलेशचन्द्रः ६ श्रीसंतोषचन्द्रः ७ बॅ. शरचन्द्रः ८ श्रीसुरेशचन्द्रश्चेति भ्रातॄणाम् । प्रमिला, सरला, ताराबाला, मणिला, प्रतिभा, कनकलता चेति भगिनीनाम् । एतेषु संतोषचन्द्रः १९३० तमे ख्रिस्ताब्दे प्रमिलाच १९३६ तमे ख्रिस्ताब्दे च परलोकमगच्छताम् ।

## गुरुशोधार्थं गमनम्

श्रीसुभाषचन्द्रस्य प्राथमिकं शिक्षणं कटकनाम्नि नगरे समभूत् १९१३ तमे ख्रिस्ताब्दे वयसः षोडशे वर्षे प्रवेशपरीक्षायां ( म्यॅट्रिक ) यशस्वितया द्वितीयं क्रमांकमधिगत्य समुदतरत् । ततो महाविद्यालये ( कॉलेज ) शिक्षणार्थं सुभाषोयं कलकत्तानगरीमभ्येत्य प्रेसिडेन्सी महाविद्यालयं प्राविशत् ।

बाल्ये मात्रा वात्सल्येन कथितानां धार्मिकाणां कथानां परिणामो मनस्यस्य विचित्रं कौतूहलमुदपादयत् । तेन स महाविद्यालयप्रवेशोत्तरं प्रथमे एव वर्षे सामान्येतरविद्यार्थिन इव विविधविलासविषयेषु मनो नासज्जयत् किंतु धार्मिकग्रन्थानां चिन्तने वाचने च तत्परोऽभूत् । तेन तस्य हृदयमधिकाधिकमेव धर्मविषये स्थैर्यमवाप । मध्यम ( इण्टर ) वर्गे विद्यमानोऽयं "कोऽहम् कुत आयातः तत्त्वं चिन्तय तदिदं भ्रातः" इति वचनमनुस्मरन् ब्रह्मज्ञानं सम्पादयितुमभिलषन् सद्गुरुं शोधयितुं कामयमानो महाविद्यालयाभ्यासं पर्यत्यजत् । विविधानि पुण्यक्षेत्राणि पर्यटत् । शिरोबद्धजटाजूटान् भस्मरूषितांगान् असंख्यान् वैरागिणः समवलोक्य तेषु स्वेष्टसिद्धिर्भवेद्वा न वेति पर्यशोधयत् । परं सर्वत्रापि उदरंभरिणो वैरागिणः साधुवेषा दाम्भिका एवेति तत्वतो विज्ञाय पुनः कलकत्तानगरमागत्य विद्यालयं प्रविष्टः अत्रशिष्टमाध्यमपरीक्षाविषयमभ्यस्य १९१६ तमे ख्रिस्ताब्दे तस्यां परीक्षायां यशस्वितया **प्रथमवर्गे उत्तीर्णोऽभूत् ।**

## यौरोप्यप्राध्यापकमुखे चपेटिकाप्रहारः

( सीनियर ) बी. ए. वर्गे अभ्यस्यन्नयमेकदा स्वाभिमानं स्वदेशाभिमानं च तदानींतनाय कस्मैचित् प्राध्यापकाय प्रादर्शयदित्थम् । प्रेसिडेन्सीमहाविद्यालये ओटन् नामा कोऽपि यौरोप्यः प्राध्यापकः संततं भारतीयान् विद्यार्थिनस्तुच्छान् मन्यमानः अवहेलयतिस्म । स एकस्मिन् प्रसंगे भारतीयानां तुच्छतया अवहेलनं कुर्वन् वदनकुहरान्मुक्ताफलानीव विकिरामीति मन्यमानः कानिचित् अक्षराणि समुदगिरत् तावदसौ तत्क्षणे एव एव **सुभाषचन्द्रमहोदयो** रोषारुणितनयनस्तस्य **ताम्रपाटले कपोले चपेटिकां सरभसं प्रादात् । भारतीयेषु स्वाभिमानो जाग्रतीत्येवमसूचयत् च ।** परमयं प्रहारस्तत्काले पुनरेवमुच्चाराकरणमुपदिदेशैव तस्मै किंतु श्रीसुभाषचन्द्रस्य तस्माद्विद्यालयाद् निस्सारणे कारणमभूत् ।

ततश्चायं श्रीमतां सर् आशुतोष मुकर्जीमहोदयानां साहाय्येन स्कॉटिश चर्चेसमहाविद्यालये प्रवेशमुपलभ्य १९१८ तमे ख्रिस्ताब्दे **बी. ए. परीक्षायां प्राथम्येन समुत्तीर्णः प्रशस्यं यशः समलभत ।**

## देशसेवकः आय्. सी. एस्.

तदग्रिमे वर्षे एव आय्. सी. एस्. परीक्षाभ्यासार्थं विलायतं गत्वा **१९२० तमे ख्रिस्ताब्दे आय्. सी. एस्. परीक्षायां प्रथमतः पंचसु क्रमांकेषु समुत्तीर्णः ।** ततश्च केंब्रिजविश्वविद्यालये बी. ए. परीक्षायां प्रशस्यं यशो लब्ध्वा स्वागमनेन भारतं देशमलमकरोत् । महत्तया सुप्रथितायां आय्. सी. एस्. परीक्षायामुत्तमतया उत्तीर्णोऽप्ययं महाभागः परकीयसाम्राज्ये प्राप्यमप्युच्चाधिकारमनपेक्षमाण आजन्म ब्रह्मचर्येण स्थातुं कृतप्रतिज्ञो भारतमातरं पारतंत्र्यशृंखलानिगडितचरणामवलोकयन् नितांतं तंतप्यमानमानसस्तां स्वतंत्रां कर्तुं बद्धपरिकरः सर्वविधैरपि प्रयत्नैः साधयितुं सन्नद्धोऽभूत् । भारतीयनेतृशिरोमणिं स्वार्थलेशविधुरं प्रथितयशसं अगण्यां सम्पदं सम्पाद्यापि स्वदेशबंधुसंरक्षणप्रवणतया क्षणादेव निष्किंचनत्वं धारयंतं बॅ. चित्तरंजनदासमहोदयं गुरुत्वेन समकल्पयत् ।

## सर्वकारनासा मरीचिचूर्णभरिता

श्रीमान् देशबंधुश्चित्तरंजनदासमहोदयः कलकत्तानगरे बंगालप्रान्तराष्ट्रीयमहाविद्यालयं प्रास्थापयत् । तथा तन्महाविद्यालये प्रधानाध्यापकपदे ( प्रिन्सिपाल ) नवतरुणमेनं सुभाषचन्द्रं प्राथम्येन नियोजयामास । परमयं सुभाषचन्द्रो भारतीयेषु नवतरुणेषु आग्लविद्यावैशारद्यापादनादपि युद्धकलानैपुण्यं प्रापयितुमपेक्षमाणो महाविद्यालये प्रधानाध्यापकपदं परित्यज्य नवतरुणानां सैनिकदलनिर्माणार्थे प्रयत्नमारभत । राष्ट्रीयसैनिकदलस्य वर्धमानं कार्यमवलोकयतः सर्वकारस्य नासा मरीचिचूर्णेन संभृता इव समभूत् । तेन संतप्तः सर्वकारः सुभाषचन्द्रमहोदयं प्रतिबद्ध्य तस्मिन्नभियोगमारचयत् । **तस्मिन्नभि-**

**योगे षण्मासं यावत् सपरिश्रमकारावासेन दण्डितोऽभूत् । श्रीसुभाषचन्द्रमहोदयस्य सर्वकारकृतः प्रथमोऽयं दण्डः ।**

## सर्वकारकृतान्युग्रशासनानि

१९२२ तमे ख्रिस्ताब्दे ऑक्टोबरमासे श्रीबाबूसुभाषचन्द्रं कारागृहाद् अमोचयत्सर्वकारः । अस्मिन्नेव वत्सरे गयाक्षेत्रे श्रीमतो देशबंधुचित्तरंजनदासमहोदयस्याध्यक्ष्येण **भारतजानपदमहासभा** ( कॉंग्रेस ) समभूत् । तस्मिन्नधिवेशने शासननिर्माणसभाप्रवेशबहिष्कारनिर्णयस्य वैय्यर्थ्यं अनुपयुक्ततां चापि सभायां सुभाषोयमतिशयेन रुचिरम् सयुक्तिकं च समार्थयत् । तस्य भाषणमिदं परिणामकारि बभूव । **गयायामेव शासनसभा ( कौन्सिल ) प्रवेशनिर्णयं यशस्विनं कर्तुं कॉंग्रेसस्वराज्यपक्षं प्रास्थापयन् ।** गयातः प्रतिनिवृत्य कलिकत्तानगरमुपेत्य श्रीमान् बॅ. चित्तरंजनदासमहाशयः स्वीयस्वराज्यपक्षसमर्थनाय **फॉरवर्ड** नामकं किंचिदांग्लभाषामयं दैनिकं पत्रं प्रकाशयितुमारभत । पंचषण्मासपर्यंतं तस्य प्रधानसम्पादको भूत्वा श्रीसुभाषचन्द्रमहोदयः ततः परित्यज्य तत्कर्म कृषीवलानां कर्मकराणां संघटनाय प्रयतमानः **वंगीययुवकपक्षमेकं** ( यंग बंगालपार्टी ) प्रास्थापयत् । १९२४ तमे ऐशवीयेऽब्दे **सुभाषचन्द्रः कलकत्तानगरपालिकायाः** ( म्युनिसिपल कॉर्पोरेशन ) **मुख्याधिकारी समभूत्** । ( चीफ् ऑफिसर ) पुनस्तदधिकारपदमपि षण्मासाभ्यन्तर एव परित्यक्तवान् । तस्मिन् किल समये श्रीदेशबंधुचित्तरंजनदासमहोदयस्य स्वराज्यपक्षो लोकप्रियः कार्यक्षमश्च संवृत्तः । तेन वंगीयः सर्वकारो रोषारुणितनयनो वंगदेशे नवनवान्युग्रशासनानि समुदघोषयत् । **तस्य प्रथमतया परिणामः श्रीसुभाषचन्द्रस्य तत्सहकारिणां च बंधने समभूत् ।** प्रथमतः कांश्चिद्दिवसान् अलीपूरकारागृहे न्यवासयत् सर्वकारः । ततः क्रमेण बन्हाणपूरकारागृहे मुर्शिदाबादबंधनगृहे च निहितवान् । ततश्च वंगदेशे तन्निवासेन स्वस्य अहितमेव भवतीति निश्चित्य **ब्रह्मदेशे मण्डालेकारागृहे** प्रास्थापयत् ।

## सर्वकारस्याप्यंते विवेकोदयः

मण्डाले प्रदेशे वायुरत्युष्ण इत्यतः सुभाषबाबूमहोदयस्यारोग्यं विकृतमभवत् । प्रतिदिवसं स क्षीणशक्तिरभूत् । तत्परिणामश्च भयंकरो बभूव । रक्तक्षयसदृशो दुर्धरो रोगस्तमाक्रामत । इयमुदन्तमुपलभ्य लोकास्तम् मोचयितुमान्दोलनं प्रावर्तयन् । तत्परिणामेन सर्वकारस्तं मण्डालेकारागृहतः इनसानकारागृहमानयत् । तथापि स रोगो वर्धमानस्तस्य अहितायैवाभूत् इनसानेपि । ततश्च जना अधिकाधिकमेव तमुन्मोचयितुमतिकातराः सर्वकारमावेदयन् । ततः सर्वकारे विवेकोदयेन **सुभाषचन्द्रो दिनांके १६ तारके मेमासे कारागृहादुन्मोचितोऽभूत् ।**

## सुभाषचन्द्रस्य महाराष्ट्रे संचारः

बंधनागारात्प्रत्यागतः श्रीसुभाषचन्द्रः कांश्चिद्दिवसान् विश्रांतिसुखमन्वभवत् । ईषद् आरोग्यमुपलभ्य पुनर्देश-जन-हिताचरणाय बद्धपरिकरो विदेशीयवस्तुबहिष्करणाय स्वदेशीयवस्त्रप्रसारकरणाय च ( खादी ) प्रयत्नमकरोत् । तदादिकर्मकरणाय **युवकसंघं** तथा **हिन्दीस्वातंत्र्यसंघं** नाम च संस्थाद्वयं प्रतिष्ठापयांचक्रे । १९२७ तमे दिशंबरावसाने मद्रासनगरे अधिनिविष्ठाया **भारतजानपदमहासभाया अखिलभारतीय काँग्रेससमितेः प्रधानमंत्रिपदे नियुक्तोऽभूत् । तथा च वंगालप्रांतीय काँग्रेससमितेराध्यक्ष्यपदेपि सन्नियोजितः ।** संपूर्ण स्वातंत्र्यं प्रचारयितुं **इंण्डिपेण्डन्स लीग** नामकं संघमेकं प्रतिष्ठाप्य बंगालप्रान्तीयशाखासंस्थायाः प्रामुख्यं च स्वतो जग्राह । १९१८ तमेब्दे मुंबापुर्यामधिनिविष्ठायां सर्वपक्षीयपरिषदि **पं. मोतीलालनेहरू**महोदयस्याध्यक्ष्ये " स्वराज्यघटनासमिति " रेका निरमीयत । एतत्समित्यास्सभासदप्यासीत् । अस्मिन्नेव वर्षे **पुण्यपत्तने प्रवृत्तस्य महाराष्ट्रप्रान्तपरिषद अधिवेशनस्य सुभाषचन्द्र एवाध्यक्षपदमलंचकार ।** तत्परिषत्कार्यं समाप्य महाभागोऽयं महाराष्ट्रे प्रमुखस्थानेषु संचारमाचर्य उज्ज्वलतरैरुपन्यासैरतितरां स्फूर्तिमुदपादयत् । एतेन संचारेण महाराष्ट्रवंगयोस्संबंधो दृढीयान् समजनि ।

## काँग्रेसपरित्यागः ।

१९२९ तमेऽब्दे लाहोरनगरे प्रवृत्ते काँग्रेसाधिवेशने श्रीसुभाषचन्द्रोऽयं सम्पूर्णस्वातंत्र्यप्रस्तावममण्डयत् । स च प्रस्तावो बहुमतैस्सम्मतोप्यभूत् । एतेन प्रस्तावेन संयोजिता **भारते प्रतिसर्वकारस्य प्रतिष्ठा विधेया** इत्येवं रूपा उपसूचना तदानीं काँग्रेससम्मता नाभूत् । बंगालप्रान्तीय काँग्रेससमितेर्नियोजनविषये तीव्रश्च मतभेदः समभूत् । तेन गांधीवादिभिरनेकदा विवादावसरोप्युत्पन्नः । तस्मिन्प्रसंगे काँग्रेससदस्यत्वमपि परित्यक्तवानयम् ।

## प्रथमं स्वातंत्र्यदिनं सुभाषचन्द्रस्य पुनः कारागृहनिवासः

लाहोर काँग्रेसतोऽनंतरं श्रीश्रीनिवास अयंगारमहोदयः श्रीसुभाषचन्द्रश्च **इण्डिपेण्डन्स लीग** नामकं संघं प्रतिष्ठाप्य २६ जानेवारी १९३० दिनं स्वातंत्र्यदिनमिति अखिलेपि भारते विशेषतश्च वंगदेशे प्रवर्तयेदेवेति निरधारयत् । तथा वंगदेशे स्वातंत्र्यदिवसे कार्यक्रमोयं महता उत्साहभरेण प्रवृत्तश्च । कलकत्तायां महती विराट्सभा समभिलत् । तदध्यक्षस्थानं वीरवरः सुभाषचन्द्र एवालमकरोत् । स्वातंत्र्यदिवसस्य उचितमेव भाषणमभूत् । सर्वकारश्च तेन भाषणेन राजद्रोहमारोप्य तस्मिन् अभियोगं कृत्वा एकवत्सरावधिकेन कारावासेन दण्डितवान् ।

## धूमयानविश्राममंदिरे ( स्टेशन ) प्रवृत्तोऽभियोगः

एकं वत्सरं यावत्कारावासमनुभूय प्रत्यावृत्तः सुभाषो लाहोरनगरे १९३१ तमेब्दे दिशांबरे मासे ३१ दिनांके तारके संपूर्णस्वातंत्र्यस्मृतिदिवसमनुपालयितुं श्रीसुभाषनेतृत्वेन नैकसहस्रजनसंभृतो विविधवाद्यवैभवपुरस्सरो यात्रोत्सवः (मिरवणूक) प्रवृत्तः । **एतदुत्सवप्रवृत्ते जनसम्मर्दे रक्षापुरुषाः** (पोलिस) **निरपराधिनो लोकान् दीर्घयष्टिप्रहारैरताडयन्** । प्रहारोयं सुभाषचंद्रे-

भ्यपतत् । १९३२ तमेऽब्दे **कलकत्तानगरे सुभाषचन्द्रस्याध्यक्ष्येण राजकीयबद्धोन्मुक्तजनानां कापि महती सभा समभिलत्।** अत्रापि सम्मिलितेषु जनसम्मर्देषु रक्षापुरुषा यष्टिप्रहारैरमर्दयन् । प्रसंगेऽस्मिन् सुभाष-चन्द्रो बलवता प्रहारेण पीडितोऽभूत् । ततः केषुचिद्दिवसेषु प्रयातेषु स्वदेशीय-विषयप्रचाराय संचरितुमारभत । परं सर्वकारो मल्हद्मण्डले प्रवेशं प्रत्य-बध्नात् । प्रतिबंधशासनमिदम् अमुनरा धूमयानविश्रांतिमंदिरे आगते च धूमयाने समयोजयत् । नाहमेतत्प्रवेशनिर्बंधशासनमनुपालयामीति प्रत्यादिशत् । तदा तद् धूमयानविश्रांतिगृहे सामान्यजनोपवेशनप्रदेशे ( वेटिंगरूम ) अभियोगः प्रवर्तितः । प्राड्विवेकोपि सप्तदिवसान्यावत् कारावासेनादण्डयत् ।

## नगरपालिकामहासभया सर्वकारनिषेधः

इमं कारावासमनुभूय श्रीसुभाषचन्द्रो बहिरायात् । पुनर्जानेवारीय २६ दिनांके तारके कलकत्तानगरे सुभाषनेतृत्वेन स्वातंत्र्यदिनार्थे महती जन-सम्मर्दभरिता यात्रा निर्गता महता उत्साहभरेण । परम् रक्षापुरुषाः तदानीमपि यष्टिभिः प्राहरन्नेव जनान् अनेकान् । तदानीमपि श्रीसुभाषचन्द्रो यष्टिप्रसाद-मलभतैव । तदवसरे रक्षापुरुषाः शासनोल्लंघनं शांतताभंजनं च सुभाषेण कृतमिति अभियोगद्वयं तस्मिन्नरचयन् । तदा च षण्मासं यावत्सपरिश्रमं कारावासेन शिक्षितोऽभूत् । तदवसरे कलकत्तानगरपालिका सर्वकारकृतं सुभाषशासनं प्रत्यषेधत् तथा च श्रीसुभाषचन्द्रमभ्यनन्दच्च ।

## आरोग्यसंपादनकृते परदेशगमनम्

१९३१ तमेऽब्दे दिशांबरमासे पुण्यपत्तने श्रीसुभाषचन्द्रस्याध्यक्ष्येण महाराष्ट्रयुवकपरिषत् समभिलत् । तत्कार्यं समाप्य तस्मिन् कलकत्तानगरं जिग-मिषति कल्याणबाष्पयानविश्रांतिसदने जानेवारीद्वितीयदिनांकतारके तम-बध्नात्सर्वकारः । तदा शिवणीकारागृहे तमध्यवासयन् । तत्कारागृहे निवसति सुभाषे उदरशूलरुजा आक्रान्तः सः । राजयक्ष्मा रोगराजोपि तमाक्रामतेवेति

भीतिरुत्पन्ना । ततः सर्वकारस्तं जबलपुरे कारागृहे समानयत् । २० तमे दिनांके वासंतीदेवी सुभाषचन्द्रमवालोकयत् कारायाम् । जबलपुरे समानीतस्याप्यारोग्यसंपादनकर्मणि किंचिदपि फलं सर्वथा नाभूत् । किंतु रोगः अधिकाधिकं यथा वर्धमानोऽदृश्यत । ततः सर्वकारो दृढारोग्यं संपादयितुं युरोपदेशं प्रयातुमन्वमोदत । **ततः श्रीसुभाषचन्द्रो युरोपखण्डे जिगमिषुः फेब्रुवारी २३ तारके मुम्बापुरीमभ्यागच्छत् । नावमध्यारोहत् ।** अध्यारोहन्नाम स्वयमधिरोढुमसमर्थः इतरेषां साहाय्येन नावि समुपवेशितः । युरोपमागत्य स व्हियेन्नानगरे कस्मिंश्चिदारोग्यमन्दिरे प्रविष्टश्चिकित्सामारब्धवान् । तत्रवसन्नयं "इण्डियन्स्ट्रगल" नामकमेकं पुस्तकं विलिख्य प्राकाशयत् । परं तस्य पुस्तकस्य भारते आनयनमत्रत्यसर्वकारेण प्रतिबद्धमेव । १९३३ दिशंबरावसानभागे रोमनगरे प्रवृत्ते पौर्वात्यविद्यार्थिपरिषदि गतश्च । ३ मे १९३४ दिवसे व्हिएन्नानगरे सुभाषचन्द्र **इण्डोयुरोपियन् सोसाइटी** नामिकां संस्थां प्रास्थापयत् । व्हियेन्नानगरे विद्यमाने सुभाषे पितुरंतिमावस्थावार्ता तंत्रीद्वारा समुपलभ्य आकाशयानेन कलकत्तानगरमागंतुं निरगात् । परं दुर्दैववशात् तदागमनात्प्रागेव ३ दिशांबरे १९३४ तमे दिवसे जनकः **श्रीमान् रायबहादुर जानकीनाथमहाभागः स्वर्गमगादिति** दुःखदायिनीं वार्तां कराचीनगरे अशृणोत् । ततः कराचीतः कलकत्तामुपेत्य दिशांबरमासं स्वगृहे यापयित्वा पुनर्जानेवारीमासे युरोपमगात् । व्हिएन्नानगरमधिवसति सुभाषे तस्योदरे कापि रोगविकृतिर्जाता इति डॉ. डोमेलनामा शस्त्रवैद्य उदरे शस्त्रेण विकृतिं च्छेदयन्नारोग्यमुदपादयत् । १९३६ तमेब्दे स आयर्लैंडमुपेतो डी व्हलेरामहाभागं संगम्य समवदत् च ।

## कॉंग्रेससमितेर्मुक्तः

लखनौकॉंग्रेसार्थे स युरोपान्निरगात् । **८ मार्चे १९३६ तमे दिवसे भारतभूस्पर्शनावसरे एव सर्वकारस्तमबध्नात् ।** ततस्तं एरवडाकारागृहे न्यधात् । स पुनस्तत्र रुजाक्रांत इति सर्वकारस्तं कलकत्तानगरे मेडिकलकॉलेज

रुग्णालये चिकित्सितुमवासयत् । तत्रापि रोगमुक्तिमार्गमनवेक्षमाणः **सर्वकारः १७ मार्चे १९३७ तमे दिवसे निर्बंधमंतरा तममोचयत्** । सुभाषचन्द्रो दृढमारोग्यसंपादनाभिलाषेण पुनर्युरोपमगात् । आस्ट्रियादेशे बाडगास्टेन इत्यत्र आरोग्यभवनमध्युवास । तत्र सार्धमासमुषित्वा लण्डननगरमुपेत्य ततो विमान-मार्गेण भारतमागच्छत् । १८३८ तमेब्दे हरिपुरे मिलिष्यमाणाया भारत-जानपदमहासभायाः (काँग्रेस) अध्यक्ष्यपदार्थे प्रथमतश्चतुर्णां पण्डितजवाहिरलाल नेहरू, अबदुल गफारखान, मौ. आझाद, बाबूसुभाषचन्द्राणां नामानि पुर-स्कृतानि, परं त्रयो नेहरू, गफारखान, मौ. आझादमहाभागाः स्वस्वनामानि प्रत्यगृण्हन् । तदा प्रतिपक्षमंतरा **अध्यक्ष्यपदे सुभाषचन्द्रो निर्वाचितः** । ततश्चाग्रिमे वर्षे १९३९ तमे त्रिपुरीकाँग्रेसार्थे महात्मनो गान्धीमहाशयस्या-नुज्ञया अध्यक्षपदमलंकर्तुं पुरस्कृतः **श्रीमान् पट्टाभिसीतारामय्यामहाभागः**। तदवसरे श्रीमान् सुभाषचन्द्रमहोदयः प्रतिस्पर्धिनं सीतारामय्यामहाभागं प्रचण्डेन बहुमतेन पराजित्य **त्रिपुरीकाँग्रेसाध्यक्षपदमलमकरोद्विजयशाली** । तदा म. गांधी-सुभाषपक्षयोस्तीव्रो मतभेदः अभ्यवर्धत । ततो विरोधवृद्धिमनपेक्षमाणः सुभाषः २८ एप्रिले कलकत्तानगरे सम्मिलितायां ऑल इण्डिया काँग्रेससमित्यां अध्यक्षपदपरित्यागमाघोषयत् । तथा काँग्रेसबन्धनादुन्मुक्तश्चाभूत् ।

## अंतरधात्सुभाषचन्द्रः

काँग्रेससमितेरुन्मुक्तोसौ स्वमतमखिलभारते प्रचारयितुं **फॉर्वर्डब्लॉक** नामकं स्वतंत्रमेव पक्षमेकं प्रतिष्ठाप्य तच्छाखासंस्थाः प्रचारयितुं तत्र तत्र समचरत् । १९३९ तमेब्दे दक्षिणभारते महाराष्ट्रे कर्णाटके च बेळगांव, धारवाड, हुबळीप्रभृतिषु नगरेषु स्वपक्षसमर्थकैर्नैकैरुपन्यासैरपूर्वां स्फूर्तिमुद-पादयत् । ततः १९४० तमेब्दे बंगालविधिमण्डले अप्रतिमं बहुमतं संपाद्य नियुक्तश्चाभूत् । कलकत्तानगरे विद्यमानाया **हॉलवेलप्रतिकृतेरुत्थापनार्थे** मह-दान्दोलनं प्रावर्तयत् । तदर्थे पुनः सर्वकारः तमबध्नात् । तथा च भारत-रक्षणशासनमिषेण फार्वर्डब्लाकगताक्षेपार्हलेखानुद्दिश्य पुनरभियोगमुत्पाद्य कारा-

गृहमवासयत् । स्वहिताचारविचारमधिकारिणो न शृण्वंतीति श्रीसुभाषचन्द्रः अन्नसत्याग्रहं निरशनमारब्धवान् । प्रथमत एव परिक्षीणा शरीरंप्रकृतिरतितरामक्षीयत । ततः सर्वकारः स्वगृहे एव स्थातव्यमिति निर्बंधेन कारागारतो विमोच्य गृहनिवासार्थे आनुकूल्यमुदपादयत् । श्रीमान् सुगृहीतनामा शिवच्छत्रपतिर्महाराजो यथा अवरंगजेबचक्रवर्तिनः कारावासादपरिज्ञात एव बहिरागात्तथैव **श्रीसुभाषचंद्रोपि अकस्मादेव अदृश्यतामयासीदिति वार्ता** २६ जानेवारीदिनांके १९४१ तमेब्दे सर्वत्रापि सुप्रसृतोऽभूत् । बाबूसुभाषचन्द्रबोसमहोदयः सर्वकारकरे कुसुमगुच्छमर्पयित्वा इव यदगात् स अपघाणिस्थानं ततश्च जर्मन्प्रदेशमगच्छत् । २६ एप्रिल १९४२ तमे दिवसे बर्लिननगरतो नभोवाण्या भाषणं कुर्वन् बी. बी. सी. उपरि तद्विरुद्धादिशा प्रवृत्तस्य प्रचारस्य सम्यगेवोत्तरं प्रायच्छत् ।

## चन्द्रग्रहणविषये अशुभा वार्ता

ततः सुभाषचन्द्रो जर्मनदेशे ड्रेसडेम इत्यत्र **आझादहिन्दसेनां** प्रत्यष्ठापयत् । पूर्वआशियास्थभारतीयानां नेतृत्वमुरीकर्तुं सुभाषो बर्लिननगरात् जलमग्नयानेन जपानदेशमागन्तुं निरगात् । **१९४३ जूनमासे टोकियो नगरमागच्छत् । ४ जुलै १९४३ तमे दिवसे सिंगापूरनगरे प्रकाशसभायां श्रीमान् सुभाषचन्द्रमहोदयः आझादहिन्दसर्वकारं प्रतिष्ठापितवान् ।**

९ जुलै १९४३ तमे दिवसे सिंगापुरे समुपस्थितान् आझादसैनिकानुद्दिश्य **"चलतु देहलीं"** इति ध्येयवाक्यमावेदयत् । ततः सर्वे आझादसैनिकाः **"चलो दिल्ली"** इत्येवमाघोषयन् । दिनांके तारके २६ आगष्ट १९४३ तमे दिवसे श्रीसुभाषचन्द्रबोसमहोदयः आझादसैनिकानां प्रत्यक्षतो नेतृत्वमंगीकृत्य **नेताजी** पदालंकृतोऽभूत । २१ आक्टोबर १९४३ तमे दिवसे आझादहिंन्दसर्वकारः ( स्वतंत्रभारत ) सुव्यवस्थापुरस्सरं प्रतिष्ठापितः ।

२९ दिनांके ब्रिटिन-अमेरिकाभ्यां सह विरुद्धं युद्धारंभमुद्घोषितवान् । १९४३ दिशांबरे नेता श्रीसुभाषचन्द्रः पोर्टब्लेअर इत्यत्र स्वकीयं त्रिवर्ण-ध्वजमुदभासयत् । १९४३ तमेब्दे श्रीमती सुभाषजननी प्रभावतीदेवी दिवं गता । मेमासे जूनमासे च १९४४ नेतृप्रवरः सुभाषः स्वतंत्रभारत ( आझाद-हिंद ) बालसेनामप्यस्थापयत् । एतस्मिन्नेव मासे भारतीयनिधिं ( हिंदव्यांक ) स्थापितवान् । ब्रह्मदेशे युद्ध्यमानेषु स्वतंत्रभारतयोधेषु ( आझादहिंदसैनिकेषु ) केनापि वा प्रकारेण जपानीयाः साहाय्यं नैवाकुर्वन् । तेन कारणेन मणिपुरात् पृष्ठतः सरणप्रसंग आपतितः । २१ आगष्ट १९४४ दिनांकादारभ्य आझादहिंदसैन्यस्य सर्वविधं चलनवलनं प्रतिबद्धमभूत् । १६ आगष्ट १९४५ तमे दुर्दिवसे नेतृवरः श्रीमान् सुभाषचन्द्रबोसमहोदयः बॅकॉकनगरं जिगमिषुः आकाशयानेन निरगात् । १८ दिनांके विमानं यंत्रविकृत्यादिहेतुना विपर्य-स्तमभूत् । **२३ आगष्ट १९४६ तमे दिवसे स वीरस्वर्गमगादिति दुःखदायिनी अशुभवार्ता टोकियो रेडियोद्वारा अखिलजगतः श्रुति-विवरमपूरयत् ।** असत्यमिदं वृत्तं स जीवतीति केचन प्रत्यायकैरुपायैरा-वेदयंति केचिन्मृत इति निरूपयंति । परमखिले भारतेऽपि सर्वे जनास्तस्य वीरवरस्य परलोकप्रयाणवार्ता वितथा एव भवतात् इत्यभिलषंतीत्यलम् ।

[ विषयोऽयं २२ आक्टोबर १९४६ दिनांके प्रकटितात् केसरीतः संगृहीत इति तेषां कृतज्ञतां स्मरामः । ]

---

# महात्मागांधीविषये सुभाषभाषणम् ।

भारतस्वातंत्र्यसंग्रामेतिहासे महात्मनो गान्धीमहाभागस्य समुचितं स्थानमानादिकं कीदृशममौल्यमित्यस्मिन् विषये अहमद्य निरूपयितुमुद्यतोऽस्मि । भारतस्वातंत्र्यसंपादनकृते भारतहितार्थे च महात्मकृता सेवा अमोघा अप्रतिमाच विद्यते । ततोऽस्मदीये भारतराष्ट्रेतिहासे आचन्द्रतारकस्थायि तन्नाम तत्कृत्यं च सुवर्णमयैरक्षरैरुल्लिखितं भवतीत्यत्र नास्ति सर्वथा संशयलेशः ।

प्रथममासीत्तेषामांग्लेषु विश्वासः । प्राग् गते जागतिके महायुद्धे समाप्ते दत्तमाश्वासनमुद्दिश्य विचारे प्रवृत्ते विश्वासघातकः कोप्यांग्लोऽस्मानवंचयादिति अवेदिषुर्महात्मानो महोदाराः । ततः सर्वकारस्य रौलेट्शासनप्रभृतीन् विविधान् प्रकारान् पुरस्कृतानवलोक्य जालियन्वालोपवनहत्याप्रकरणेन च उद्विग्नचेतसो गांधीमहाभागा असहकारसत्याग्रहप्रभृतीन्नवनवानुपायान् आविरकुर्वन् । भारतस्वातंत्र्यसंपादनकृते महात्मानो गांधीमहाभागा अनवरतं अधिकविंशवत्सरं यावत् कर्म तपोरूपमाचरंतः प्रयतमाना दरीदृश्यंते । यदि म. गांधीमहाभागाः भारतनेतृत्वस्य स्वीकारं न अकरिष्यंश्चेत् तर्हि भारतं समग्रं सुप्तावस्थामेवान्वभविष्यत् ।

१९२० तमेब्दे दिशांबरे नागपुरे कॉंग्रेसाधिवेशनावसरे भारतीयजनतायाः पुरोभागे असहकारान्दोलनकार्यक्रमं निवेदयंतो यदब्रुवन् तद् अहं स्मारयामि वः ।

भारतीयेषु यदि सितधाराः करवालाः स्युः चेत्तर्हि ते तैः प्रहृत्य परान् विजयशालिनो भवंतिस्म । परमिदानीं नास्त्युपायः । संप्रति तु सशस्त्रा क्रांतिरसाध्या । अतो हि सत्याग्रह—असहकारोपायावलंबनमेव श्रेयसे भवतीति । इत्यादि ।

[ आक्टोबरे २।१९४३ तमे दिवसे महात्मागांधीमहाभागस्य ७५ तमो जन्मदिनोत्सवः महता उत्साहेन तत्र प्रवर्तितः । तदवसरे श्रीसुभाषचन्द्रबोसमहोदयो यदभाषत तस्यायमेकदेश उध्दृतः । ]

—काश्यपः

---

# 'कार्यकर्ता न मुह्यति'

अयि श्रेष्ठाः गीर्वाणवाणीप्रणयिनः नानाशास्त्रनदीष्णाः वाचकवरेण्याः सुभाषांके त्वं किमपि लिख इति संपादकमहोदयैः आज्ञप्तोऽहं 'भाग्यवतां पुण्यशालिनां गुणवर्णनेन पुण्यभाग् भवति जनः' इति सूक्तिं मनसि कुर्वन् तदाज्ञां उल्लंघयितुं नाशक्नवम्। अतः किंचिदिव विलिखामि। सागरस्थानि सर्वाणि रत्नानि संग्रहीतुं न शक्नोमि अतः एकमपि ग्राह्यं इति करणं अज्ञस्यैव शोभते। तथैव श्रीमतः सुभाषस्य चरित्रसागरे यावान्ति रत्नानि वर्तंते तानि सर्वाणि संग्रहीतुं असमर्थेन मया एकमपि अगृहीतं चेत् अज्ञता एव स्फुटी-भवेत्। अतः तन्मध्यात् कानिचित् यावत् बुद्धिवलोदयं संगृण्हामि। जगति वर्तमानाः प्रायः कार्यं अकुर्वाणाः सर्वेऽपि पुरुषाः एवं ब्रुवते 'यदहो कालो यदि अनुकूलः स्यात् तर्हि वयं सर्वमपि कर्तुं प्रभवामः, परंतु कालस्य प्राति-कूल्यात् किमपि न कुर्मः'। तथापि एतद्वचः किल सालसानां, येऽत्र कार्यकर्तारः तेतु प्रतिकूले काले एव कार्याणि साधयन्ति पौरुषं प्रकटयन्ति कीर्तिं लभन्तेतराम। राणाप्रतापसिंह श्रीशिवरायसदृक्षाः पुरुषाः महति प्रतिकूले काले एव स्वराज्यस्थापनसदृक्षं कार्यं कृत्वैव ज्योत्स्नाधवलां सुरनगरगामिनीं कीर्तिं चिरकालं स्थापयामासुःभूलोके। श्रीसुभाषचंद्रः अपि यत्सत्यं तादृगिव दारुणं कर्म कृत्वा चिरस्थायिनीं कीर्तिं विधाय सुखं तिष्ठति। एतस्य पुरतः कीदृशः कालविपर्ययः अवर्तत तदवलोकयन्तु। आंग्लशासनसदृक्षं महत्तमं राजशासनं यस्मिन् शासने बहुतमैः साधनैः स्वर्गे भवन्ति गमनागमनान्यपि स्वस्थाने स्थित्वैव जनाः जानन्ति किमु वक्तव्यं भुवि वर्तमानानि जानन्ति इति। तथापि अयं धीमाम् वीरः बहिश्चरैः अंतश्चरैः गुप्तचारैः लक्षितोऽपि सर्वान् अपि वंचयित्वा एकस्मिन् दिने अलक्ष्यतां अगात् श्रीभगवान् कृष्ण इव। अत्र च सर्वेऽपि जनाः गतः गत इति ब्रुवाणाः चकितचकिताः समभूवन्। अधिकारिणो

विमनस्का अभूवन् । येषां दृष्टिकटाक्षात् वायुरपि अन्तर्यातुं न प्रभुः तेषु सर्वेषु जीवत्सु सत्सु क्रांतिकारी अयं वीरः निर्गत एव । यतः कर्तृणां असाध्यं भुवि किमपि न वर्तते । भवतु निर्गतोऽयं श्रीमान् अन्यं वेषं स्वीकृत्य स्वकार्योद्देशेन अन्यान् बहून् देशान् बभ्राम । यतः इदानीं अन्ये बहवो देशाः अस्मत् राज्य-कर्तृणां शत्रवो भूत्वा अयुध्यन्तातन्मध्यात् केषांचन साहाय्यं संगृह्य यदि वयं प्रयतामहे तर्हि कामपि आश्चर्यकारिणीं सिद्धिं वयं आप्नुमः इत्यासीत् तस्य मनसि दृढीयान् विश्वासः । मध्येमार्गं गच्छन् अयं वीरः वेशसदृक्षं नामान्तरं संगृह्य स्ववेशसदृक्षं कंचन सहकारिणं संगृह्य अमुं देशं पर्यव्रजत् । ततः अन्यान् अपि सहकारिणः लब्ध्वा रशियादेशं गत्वा ततः जर्मनदेशस्य 'बर्लिन' राजधानीं सुखेन आप्नोत् । तदानीं तत्रत्यैः वृत्तपत्रैः एवं उद्घोषितं यत् हिंदुस्थानदेशधुरीणः सुभाषचंद्रमहोदयः ह्यः अत्र अवततार कुशलोचास्ते इति ।

## 'जर्मदेशस्थकार्यम्'

तत्र स्थित्वा सर्वाः युद्धभूमीः स्वयं अपश्यत् तथाच तत्रस्थानां हिंद-वासिनां एकां लघीयसीं चमूं अपि स्थापयामास ।

## जपानदेशागमनम्

ततः कैश्चित् दिवसैः तत्रस्थान् कांश्चन सहकारिणो गृहीत्वा जलगुप्त-यानेन (पानबुडी) टोकियोनगरं जपानराजधानीनगरं समलमकरोत् । आगतस्य तस्य महते मोदभरेण जापानाः स्वागतमकुर्वन् । तेजीयसां अयमेव विशेषः सर्वेऽपि तान् स्वीयान् मन्वते ।

## अध्यक्षपदस्वीकारः

तदानीं जपानैः मलयादिदेशाः आक्रान्ताः आसन् । ततश्च राजनीत्य-नुसारं तत्रस्थान् मनस्तोऽपि आत्मसात्कर्तुं ते एवं उद्घोषयन् यद्यपि अस्माभिर्भवन्तः मलयदेशवासिनः जिताः तथापि नास्माकं भवन्तः शत्रवः किन्तु

मित्राण्येव अतः इत उत्तरं हिंदुस्थानदेशस्य स्वातंत्र्यार्थं भवन्तः संघटिताः भवन्तु इति । तदर्थं यत यत् साहाय्यं अपेक्षितं भवेत् तत् तत् सर्वमपि वयं दास्यामः। ततः तत्रस्थाः पुरुषाः स्वातंत्र्यसभां साधयामासुः। परंतु यद्यपि एतत् जपानाः उदघोषयन् तथापि तत्र मनस्तः किमपि नासीदेत्र अतः अस्याः सभायाः जपानराज्यकर्तॄणां भूयोभूयो विसंवादः एव अवर्धत। तेन च अग्रे किमपि कार्यं नाभूत्। अस्मिन्नवसरे एव इमे जपानदेशे संप्राप्ताः आसन् । तेषां विषये जपान-देशीयानां मनसि आदरोऽप्यासीत् । अतः एभिरेव अस्याः संसदः अन्यक्षपदं स्वीकार्यं इति पूर्वतनैः अध्यक्षैः निर्धार्य तादृक उद्घोषितमपि । ततः सिंगापुरं समागत्य अस्याः संसदः सिंगापुराधिवेशने अध्यक्षपदं अलंचकार सुभाषचंद्रः ।

## ' अग्निमोदयारंभः नेताजी उपपद प्राप्तिश्च '

तद्दिनादारभ्य अग्निमोदयस्य अरुणोदय एव संवृत्तः । प्रथमतः एव ' आझाद हिंद सेना ' नाम्नी चमूः अस्माभिः स्थापिता वर्तते इति सर्वस्मै जगते निवेदयामासः नेताजीसुभाषचंद्रः । अस्मात् कालादारभ्य चम्वाः नेतृत्वं स्वीकार्य नेताजीपदवीं आप

## ' कार्यकर्तॄणां द्रव्यलाभः '

सर्वाण्यापि कार्याणि द्रव्यनिघ्नानि भवन्ति । अत्र सर्वेषामपि ऐकमत्यम् बहवः एवं ब्रुवते द्रव्यं यदि भवेत् तर्हि वयं बहु विधास्यामः। परंतु एवं वर्तते लोहचुम्बकवत् द्रव्यं आकर्षति कार्यकर्ता। कार्यकर्तुः पुरतः द्रव्यराशिः समागच्छति । अस्य प्रत्यक्षमुदाहरणमेव सुभाषचंद्रः। एकदा सुभाषस्य मनसि एवं समागतं यत् अस्माकं एका ' निधिसंस्था ' ( बँक ) अपेक्ष्यते । तदा केनचित् कालेन एत प्रत्यक्षीकर्तुं कश्चन यवनव्यापारी समागतः । स तं अब्रवीत् मन्मनसि ' आझादहिंदनिधिसंस्था ' स्थापनीया इति वर्तते । तदर्थं मूलधनं किंचिद् अपेक्ष्यते तच्छ्रुत्वा सोऽपृच्छत् कियत् द्रव्यं अपेक्ष्यते सुभाषो ब्रूते

पंचाशत्लक्षप्रमितम् । आम् एतावदेव । अहमेव त्रिंशत् लक्षप्रमितं ददामि विंशत् लक्षमितं अन्येभ्यः आनीय दास्यामि । अवलोकयन्तु द्रव्यं नाम कार्यकर्तुः कियती मात्रा । वाक्सदृशं सः स्वकीयं द्रव्यं तेभ्यः समर्प्य अन्यतोऽपि आनीय आझादहिंदनिधिं प्रतिष्ठितवान् ।

एकदा सुभाषचंद्रः व्याख्यातिस्म । व्याख्यानोत्तरं पुष्पमालासमर्पणं समभूत् । तां मालां गृहीत्वा सोऽब्रवीत् महत्तममूल्यं यो दद्यात् स एव इमां पुष्पमालां गृण्हयात् । ततः एकः लक्षमितं मूल्यमघोषयत् अपरः द्विलक्षं अन्यः त्रिलक्षम् ततोन्यः पंचलक्षम् ततोऽपरः सप्तलक्षं जनास्तु अवलोकयन्त एव अतिष्ठन् । । ततः एकः उत्थाय धनिकः उच्चैः स्वरेण अब्रवीत् मदीयं सर्वमपि धनं अस्य मूल्यं तच्छ्रुत्वा जनाः चकितचकिता एव समभूवन् । अपरस्मिन् दिने तस्य सर्वस्वस्य मूल्यं द्वादशलक्षरूप्यकप्रमितं वृत्तम् । अवलोकयत द्रव्यं कार्यकर्तारं विचिनोति न कार्यकर्ता द्रव्यम् । एकदा रंगूनतः अन्यं ग्रामं गन्तुं निर्गतः सुभाषः विमानावतरणे ( विमान तळ ) प्राप्तः, तं प्रस्थापयितुं जनाः अपि आगताः आसन् । विमानप्रस्थानाय आसीत् कश्चन कालः । तदानीं सुभाषः भाषतेस्म यदहो अस्माकं विंशतिलक्षरूप्यकाणां वर्तते अपेक्षा । तद्वाक्यपूर्त्यनंतरमेव सर्वैरुक्तं वयं दास्यामः इत्युक्त्वा गमनात् प्रागेव तत्रैव विंशतिलक्षप्रमितं द्रव्यं ते सर्वे अदुः । अहो शब्दशक्तिः ।

एकदा सुभाषस्य वर्धापनदिवसः आसीत् । तदानीं कैश्चिदुक्तं एतेषां अस्मिन् दिने सुवर्णतुलां विधेया । ततः तथैव निश्चित्य उदघोषितं यत् सुवर्णतुलार्थं सुवर्णं यथाशक्ति सर्वैर्देयं । किं वक्तव्यं जनैः सन्निधे विद्यमानं सर्वमपि सुवर्णजातं तेभ्यो दत्तम् यदा यदा द्रव्यं अयाचत तदातदा तस्य पुरतः पर्जन्यपातं द्रव्यं अपप्तत् । यतः तेषु कर्तृत्वम् , निःस्वार्थत्वंच आसीत्

## ‘ यथाद्रव्यबलं तथैव मनुष्यबलम् ’

एकदा रंगूननगरे सभा आसीत् । सहस्रशो जनाः श्रोतारः आसन् वक्तुर्यदि विशेषः स्यात् तर्हि श्रोतॄणां का न्यूनता । यदायदा श्रोतारो न

भवन्ति तदातदा वक्तुर्दोष एव तत्र मुख्यं कारणं । तं दोषं दूरीकर्तुं वक्ता जनान् एव निंदति । नैतत् रुचिरं वक्त्रा एवमेव मनसि निधेयं मद्दोषात् एव श्रोतारो नायान्ति इति । तं दोषं दूरीकृत्य जनान् आनेष्यामि इति । भवतु । वक्ता सुभाषचंद्रः । अहो तस्य वक्तृत्वम् । अनेन भाषणेन यत् सर्वं जनाः देहमपि व्यस्मरन् । सुभाषः अब्रवीत् 'देशः स्वातंत्र्यं याचते तस्मै तत् अवश्यमेव देयं, परंतु तत् प्राक् स्वशिरांसि हस्तेषु संगृह्य देहान् ये अर्पयेयुः एतादृशाः वीराः पुरुषाः वीराः अंगनाश्च अपेक्ष्यन्ते । तदा श्रव्यश्रोतारः वयं स्मः वयं स्मः इति उच्चैः स्वरैः अकथयन् हस्तांश्च उदयच्छन्। तदा चंद्रः ब्रूते स्म अहो अद्य केवलं कथनेन हस्तोद्यमनेन कार्यं न भवेत् । अद्य अत्र आगत्य अस्मिन् आत्मार्पणपत्रे स्वहस्ताक्षरं कुरुत। तत् हस्ताक्षरं स्वशरीरस्थर-क्तेनैव विधेयम्। अहो आश्चर्यं तदा एतादृशः जनसंमर्दः उदतिष्ठत् यत् सर्वेषां हस्ताक्षरग्रहणं दुःशकमेव अमंस्तचंद्रः । बहवो वीराः पुरुषा युवतयश्च स्वशरीरं शस्त्रेण निकृत्य रक्तं निष्कास्य तेनैव रुधिरेण स्वहस्ताक्षरं प्रतिज्ञापत्रे अकुर्वन् ।

## हिंदीराज्यस्थापना

ततः अयं वीरः हिंदीराज्यं संस्थाप्य सर्वत्र तां स्थापनां प्रकटीचकार राज्यं इत्युक्ते भूमिः अपेक्ष्यते न हि अंतराले राज्यं तिष्ठति । अतः जपानै राक्रान्तं अंदमाननिकोबारप्रदेशं आत्मसात् आकरोत् । ततः अस्य राज्यस्य नेतृत्वं स्वयं अगृह्णात् । स्वकीयं नाणकं निर्मातुं नाणकनिर्माणशालां (टांकसाळ) व्यरचयन् स्वकीयां आझादसेनां च । तथा अन्ये जर्मनादिदेशाः एव एतत् स्वतंत्रं राज्यं एते स्वतंत्रशासनकारिणो नेतारः एतत् सर्वं मनसा अमानयत् । एतेषां लक्षप्रमितं सैन्यं आसीत् ।

## डी. व्हलेराप्रेषितः संदेशः

'श्रीमद्भिः हिंदीराज्यं प्रस्थापितं एतत् श्रुत्वा सानंदं समभवत् मे मानसम् । भवतां राज्यस्थापनादिनं श्रुत्वा अस्माकं मनः अस्माकं राज्य-स्थापनदिनं अस्मरत् । इदानीं यादृशे प्रसंगे यूयं स्थ तादृशे प्रसंगे एव तदानीं वयं आस्म एतत् कार्यार्थं भवन्तं अहं अभिनंदामि । तथा भवन्तः तथा

भवत्सहकारिणश्च अस्मिन् कार्ये सुमहत् यशः आप्नुवन्तु इति वयं इच्छामः इति।

श्रीशिवरायाणां पश्चात् हिंदराज्यं येन पुनः संस्थापितं एतादृशः अयमेव एकवीरः। तत्राऽयमपि यस्मिन् अंदमानस्थाने वै सावरकरप्रभृतयः राष्ट्रोद्धारकाः कारायां आसन् तत्रैव प्रस्थापितमभूत्। अयमपि एकः विशेषो योगः। एतद्राज्यं चिरकालं नातिष्ठत्। एतत् भिन्नम्। तथापि इतिहासविदः श्रीसुभाषस्य अंदमानद्वीपे स्वतंत्रं हिंदराज्यं कंचित्कालं आसीत् इति विलिखेयुरेव। अहो धन्योऽयं पुमान् षट्सप्तवारं कारां अनुभूय यः हिंदराज्यसंस्थापकतां प्राप्नोत्। एकदा कश्चन पुमान् एकस्मिन् प्रसंगे एतान् अन्वयुङ्क्त यदहो बहवः पुमांसः पेशवेराज्यनाशोत्तरं स्वराज्यस्थापनार्थं प्रायतन्त तथापि स्वराज्यस्थापना कुतो न भवति। तदानीमुक्तवान्। अरे यथा कश्चन पुरुषः आपणं गत्वा कंचन पदार्थं क्रीणाति तत्र सः तस्य पदार्थस्य यत् मूल्यं तत् सर्वं वितरति यदा तदैव तं पदार्थं लभते, तथा यावत् पर्यन्तं स्वराज्यस्य मूल्यं यावत् वर्तते तत्सर्वं वयं न वितरामः तावत् स्वराज्यप्राप्तिः कथं स्यात्। भवन्तः संपूर्णमूल्यं ददतु स्वराज्यं आत्मसात् भविष्यति। अस्य मूल्यं किं बहूनां प्राणाः इति। न हि केवलं अहिंसया राज्यं लभन्ते जनाः। भवतु। यं भूप्रदेशं स्वाधीनं अकुर्वन् तस्य नूतनं नामधेयं ते अकुर्वन् ‘अंदमान’ इत्यस्य ‘शहीद’ इतिनामधेयं, निकोबार इत्यस्य ‘स्वराज्यं’ इतिनामधेयं। ततः स्वतंत्रराज्यशासका इमे पराक्रान्तं स्वीयं हिंददेशं आत्मसात्कर्तुं प्रचलिते महायुद्धे वयमपि सहायाः स्मः इति उद्घोष्य इंग्लंडअमेरिकादेशैः साकं युद्धं उदघोषयन्। अनंतरं स्वकीयां सेनां संगृह्य आसामं यावत ते संप्राप्ता अभवन् परंतु ततः अस्मद्दैवदुर्विलासात् यादृशं साहाय्यं अपेक्षितं आसीत् यादृशं च जपानैः प्रतिज्ञातमासीत तादृग् विधातुं ते नाशक्नुवन्। तेन च समग्रवृत्ति विमानानां अन्नस्य च अभावात् एतेषां सैन्यं पराबभूव। तथापि एतावत् कार्यं अभूत् यदि वयं साधनानि लभेमहि तर्हि नास्म वयं असमर्थाः इतिसुभाषसैनिकाः जनान् अदर्शयन्। अनया रीत्या अयं चंद्रः स्वदेशात् बहिर्गत्वा शुक्लेंदुवत् वृद्धिं अगात्। परंतु अस्यवृद्धिं असहमानः कालराहुः अमुं चंद्रं अग्रसत्। तथापि यथा राहुग्रस्तोऽपि इंदुः कालं प्रतीक्ष्य

पुनः पूर्ववत् प्रकाशते एव अयमपि पुनः प्रकाश्य सर्वान् अपि अस्मान् सुखयेत् इति बाढं विश्वसिमि । भवतु । सुभाषविषये यावत् लेखनीयं तावत् सर्वमपि न्यूनमेव भवेत् । तथापि स्वशक्त्या किंचिदिव विलिख्य वाचकानां पुरस्तात् स्थापितं वर्तते। शोभनाशोभनविषये वाचकाः प्रमाणम् । अन्ततः अस्य लेखस्य वृत्तं केसरीसुभाषांकात् तथा लोकमान्यपत्रस्य आझादहिंदपुरवणीनाम्नः अंशात् गृहीतं । अतः तेषां उपकृतिं संस्मृत्य तेभ्यः संपादकेभ्यः धन्यवादान् वितीर्य विरमामि लेखनात् इति शम्

व्याकरणकोविदः
शेण्डेगणेशशास्त्री
९४५ गृहांकः सदाशिवविभागः
पुण्यपत्तनम् २.

---

# श्रीसुभाषचन्द्रस्य सुवर्णवृष्टिः

" वृणते स्म सुभाषचन्दिरं गुणलुब्धाः स्वयमेव संपदः "

---

इतिहासे विजयनगरसाम्राज्यप्राणप्रतिष्ठापनकर्त्रा यवनश्रीसौभाग्यापकर्षेणसमुपदर्शितकृपाकार्पण्येन समधिगतलौकिकवैदिकव्यापारनैपुण्येन विद्वत्प्रगण्येन सन्यासिवरेण्येन विद्यारण्येन विस्खलितहिन्दूजनतासंघटनाप्रावीण्येन प्राक् सुवर्णवृष्टिः कारिता इति संश्रुत्य चित्रीयते चमत्क्रियते च चेतः । परं परमपावनप्राचीनब्रह्मर्षिसत्रह्मचारिणा वसिष्ठविश्वामित्रादिसतीर्ध्येन वाग्नुधात्र्ययेन वश्यवाचा विद्यारण्येन स्वतपःप्रभावेण वा महामहिम्ना वा कारितायां सुवर्णवृष्टौ तत्र वस्तुतः नास्त्येव तादृश आश्चर्यस्य विस्मयस्य वा अवकाशः । यतो हि तपस्सिद्धाः स्वतपो-

महिम्ना किमपि वा सर्वसाधारणजनतादुश्शकं कार्यं कर्तुमाशाने कुर्वीरन्नेत्र । नास्त्येव तपस्विनाम् असाध्यं नाम जगति । एवं स्वब्रह्मवर्चसा प्रतिसर्ग-निर्माणकर्मणद्यलंकर्मीणानां विद्यारण्यसदृशानां कर्मन्दिवृन्दवृन्दारकाणां कांचनवृष्टिर्नाम नैतत्महत्कर्म । न तत्र स्तोकमपि विस्मितव्यं चमत्कर्तव्यं वा ।

परं तु तदेव अनशनव्रता अजप्तजपेन त्यक्तवैभक्तिना अज्ञातयज्ञ-यागेन अश्रुतश्रुतिना विस्मृतस्मृतिना अमीमांसितब्रह्ममीमांसाशास्त्रेण अपरि-शीलितपुराणेन कदाप्यकृतसंध्यावन्दनेन येन केनचित् सर्वसाधारणेन पुंसा यदि तादृशी सुवर्णवृष्टिः क्रियेत तदा तन्महदेव आश्चर्यावहम् अद्भुतम् अत्यन्तविस्मयजनकं चमत्कारकारकंच । स च पुमान् सर्वैरपि मुक्तकंठं श्लाघनीयः संस्तवनीयः माननीयः प्रशंसनीयः आदरणीयः पूजनीयः पूज्यते च । एतादृशानामेव चित्रविचित्रचारूदारचरितानां विश्ववंद्यविभूतिपुरुषाणां मालिकायामंतर्भावमर्हति शूरवीरः श्रीसुभाषचंद्रः । इदानीं बद्धमुष्टिमहाशय-भूयिष्ठे उक्तदरिद्रे विंशतिशतमानेऽपि परदेशं गत्वा भारतस्वातन्त्र्यार्थं सुवर्णवृष्टिमेव आकलय्य चत्वारिंशत्कोटिभारतीयहृदयपीठाधिष्ठिता व्यक्तिर्नाम सुभाषचन्द्रबोस एव ।

हिंदुस्थाने उपविश्य अहिंसा—अस्पृश्योद्धार—खादी—उपवास—सत्या-ग्रहादिकार्यक्रमैः स्वराज्यं नैव संपादयितुं शक्यते । केवलं प्रार्थनाभिरनुनयेन प्रकटनाभिः घोषणाभिर्याचनया वा जगति न कोपि न कस्मैचिदपि स्वाराज्यं प्रादात् प्रददाति प्रदित्सति वा । स्वराज्यप्राप्तये एक एव राजमार्गो नाम युद्धमेव । 'तस्माद्युद्धयस्व' भारत इति भगवतः सव्यसाचिसारथेः भव्यावहं दिव्यसन्देशमेव अधिगत्य अहम्य "स्थितोस्मि गतसन्देहः करिष्ये वचनं तव." इति प्रतिज्ञाय श्रीसुभाषचंद्रबोसः वेषान्तरेण जापानमगच्छत् । तत्र च स्वकीयगीर्वाणगुरुखर्वेतरगर्वसर्वकषेण आसाधारणेन वाक्पटुत्वेन तत्रत्यान् आंग्लैर्वंचितान् कृष्णवर्णीया इति गर्हितान् निर्भर्त्सितान् हिन्दव इति धिक्कृतान् तिरस्कृतान् शपितान् अत एव कुपितान् अनाथान् अगतिकान् सर्वानपि हीन—दीन—दून— भारतीयभटान् आकृष्य आहूय स्वराज्यं प्रदास्य.मी-त्याश्वास्य प्रोत्साह्य एकीकृत्य च अपकारकारि—स्वार्थसाधु—धूर्त—प्रतारक-

आंग्लसेनाप्रतिभटनोद्देशेन "आझादहिन्द" नायकस्सर्वतन्त्रस्वतन्त्रं भारतसर्वकारमेकं संस्थापयामास। धूर्तशिरोमणिब्रिटिशसेनासेनानीनां नैकविधवर्णद्वेषविषोद्वमत्कपटतन्त्राणां वशंवदीभूय प्राणांतिकविपत्परंपराप्रक्षुण्णाः लक्षशोऽशरणाः त्राहि त्राहि त्राही...ति वदन्तः अनाथपरदेशिहिन्दवः सुभाषचन्द्रस्य त्रिवर्णध्वजस्य अधस्ताद्लब्धाश्रयाः सुसंघटिताश्च भूत्वा भारतदास्यविमोचनाय संनद्धा अभूवन् परं तु स्वतन्त्रसर्वकारस्थापनं नाम न खलु सुलभसाध्यं कर्म। "सर्वारंभास्तंडुलप्रस्थमूलाः" इति वचनमनुसृत्य शासनसंस्थानिर्माणार्थम् अपरामितधननिधिरपेक्ष्यते। मासिमासि सैनिकानाम् इतरकार्यकारिणां च वेतनं दातव्यम्, लक्षाधिकजनानां प्रतिदिनम् अशनवसनादीनां कृते युद्धोपयुक्तसामग्रीतीक्ष्णायुधाद्युपकरणसंपादनाय च असंख्या अपारा च संपद् आवश्यकी आसीत्। परं तु सुभाषचन्द्रस्य तच्चिन्तैव नासीत्। स तु धीरधीः 'साहसे श्रीः प्रतिवसति' इत्यात्मविश्वासेन कार्यं प्रारब्धवान्।

## "जनानुरागप्रभवा हि संपदः"

सुभाषचन्द्रप्रारब्धकार्यस्य महत्तां जानानाः श्रीमज्जनाः स्वयमेव आगत्य स्वस्वसर्वस्वमेव सुभाषचन्द्रस्य राष्ट्रकार्यार्थे उपहृत्यापि समर्प्यापि अधिकदानाक्षमतया न तृप्यन्तिस्म। एकस्मिन्नेव ब्रह्मदेशे जाग्रत्यामप्युन्निद्रायां दारिद्र्यपिशाचिकायां द्विकोटि २०००००० रूप्यकाणि संगृहीतानि। एकः सयामप्रान्त एव सुभाषचन्द्रस्य पदतलयोः भक्त्या ४०००००० चत्वारिंशल्लक्षरूप्यकाणि समर्प्य कृतकृत्यं धन्यं चामन्यत आत्मानम्। सुभाषबोसस्य याचनामपि महान्तम् अनुग्रहं प्रसादमेव आकलयन्ति स्म श्रीलाः। सुभाषचन्द्रप्रदत्तसर्वापरिमितसंपद्भराः लक्षाधीश्वरा आत्मानं धन्यं धन्याग्रेसरं च मन्यन्ते स्म। सुभाषस्य आझादहिन्दसेनार्थे निःशेषविश्राणितकोषाणां गलितविभवानामपि परामेव संतृप्तिमुपसेदुषां भारतीयकोट्यधीश्वराणां नैकान्येव उदाहरणानि समुपलभ्यन्ते।

## सुभाषस्यवक्तृत्वम्

### "तस्य निस्सरते वाणी जन्हुकन्याप्रवाहवत्"

सुभाषचन्द्रस्य सभासु भाषणानि श्रोतुम् अनेकसहस्रा एव जना आगच्छन्तिस्म। बाला अबला स्थविराः बधिराः खंजाः मूकाः व्यंगाः पशुपालाः गोपाला आ विपालाः कुपालाः रजकाः संमार्जका अपि बहुदूरदूर-स्थानेभ्यः अहमहमिकया सुभाषचन्द्रस्य स्फूर्तिदायकभाषणानि संश्रोतुमाधा-वन्तिस्म।

रंगूनप्रभृतिपट्टणेषु सभामंडपस्य मध्ये अत्युच्चवेदिकामारुह्य सेनापतिवेष-धारिणि सर्वजननयनमनोहारिणि पारतन्त्र्यश्रृंखलोच्छेदकारिणि सुभाषचन्द्रे भाषमाणे प्रदर्शयति च आंग्लशासकानां क्रौर्यं, आविष्कुर्वति ब्रिटीशसेनापतीनां वर्णभेदनिमित्तकपक्षपातं, व्यंजयति अनाथ–अगतिक–निष्पाप–तपस्वि–हिन्दू-बान्धवानां विषयेऽकंपाम् अनुकंपां, प्रतिपादयति स्वतन्त्रसर्वकारस्थापनाया आवश्यकतां, प्रोत्साहयति च जनान् इंग्लीशसैनिकानां प्रतीकारकर्मणे, प्रेरयति चत्वारिंशत्कोटिहिन्दूद्धारार्थं, प्रचोदयति दिल्लीप्राकारप्रोद्भेदनाय प्रोत्तेजयति च भारतदेशतः अर्धचन्द्रप्रयोगेण हूणान् निष्कासयितुं, स्मारयति शिवछत्रपति-विद्यारण्यप्रतापादिप्रतापशालिपूर्वजानां रोमहर्षणचित्रचरित्राणि सर्वेऽपि स्वदुर्द-शाविदः सुभाषसदृशनेतृलाभजातमुदः सदस्सदः समुच्छलदुत्साहाः समुत्सिक्त-स्वराज्यप्रेमपूराः समुद्रिक्तान्तःकरणाः समुद्वेल्लितभावनातरङ्गाः परवशाः नेताजी-कथितं किमपि वा दातुं कर्तुं सन्नह्यंति स्म। यदि सः तान् वारिधौ निमज्जनाय अग्निप्रवेशाय हालाहलभक्षणाय व्यालाननचुंबनाय वा समादेक्ष्यत् तदा ते सर्वेऽपि तत्क्षण एव तथाऽकरिष्यन्। तदीयभाषणपरिणामः जनाना-मुपरि इयद्बलवान् भवतिस्म यत् तदा ते तदाज्ञया कीदृशमपि कीदृग्विधमपि महात्यागं कर्तुं सज्जीभवन्तिस्म। सर्वस्वाहुतिदानायापि न पुरो वा पश्चाद्वा निरीक्षन्तेस्म।

सभासु "नवीनसर्वकारस्थापनार्थं विपुलः धनसंग्रहः अपेक्ष्यते । कार्यस्य महतीम् आवश्यकतां च जानन्त्येव श्रीमन्तः । न वयमेतत्कार्यकृते कस्याप्यन्यायेन बलात्काराद्वा श्रीमतः द्रव्यमपजिहीर्षामः । भवन्तः एव राष्ट्रप्रेमिणः स्वसन्तोषेण यावच्छक्यं साहाय्यं कुर्वन्तु वितरन्तु धनराशिम्, उत्तारयन्तु उद्धारयन्तु उत्थापयन्तु उन्मोचयन्तु च पारतन्त्र्यपंके सीदन्तीं परकीयशासनशृंखलानिगडितां भारतमातरम्" इति सभिकगणान्तःकरण-विद्राविण्या परिणामकारिण्या वाण्या सकरुणं सपटांचलप्रसारं राष्ट्रकार्यार्थं "भिक्षां देहीति" याचमाने सुभासबाबौ तत्क्षण एव एकः रूप्यकाणां सहस्रं प्रतिजानाति अन्यः दशसहस्रं अपरः पादलक्षंपरोऽर्धलक्षं कोपि पूर्णलक्षं कश्चित् पंचलक्षं कश्चन दशलक्षं च धनं प्रदित्सति स्म ।

श्रीसुभाषचन्द्रबोसे याच्ञावृत्तिमंगीकुर्वति सति न केवलं यक्षसदृक्षलक्ष्मी-कटाक्षलक्षिताः लक्षाधीश्वरा एव वितितीर्षन्ति स्म, परं तु सामान्यमध्यम-वर्गीयजनाः स्त्रियोऽपि सर्वस्वमेव दिदादिषन्ते स्म । काचित् कंठाभरणं सोत्कंठं प्रयच्छति । एका करालंकारं कनककंकणयुगलमेव निस्सकाचं समर्पयति । काचन चंचत्कांचनकांचीमेव दत्ते । अपरा कंठलोलल्लुलितललन्तिकां सलीलं लाति । अन्यां-गना अंगदमुपहरति कापि केयूरं कलयति इतरा मुक्तलोभा मुक्ताहारं परित्यजति परा रंकापि पंकेरुहाक्षी शशांकभासुरं ताटंकयुगलं निश्शंकं ऋच्छति । कापि चूडामणिं प्रदत्ते । काचित् चन्द्रहारमुपनयति काचन स्वदयितदयितमंगुलीयक-मेव दयते । अन्या कापि नूत्नतमं रत्नवलयमेव विसृजति । अपरा काचित् नवीन-नूपुरमेव दिशति । इतरा काचन धन्या स्वसर्वालंकारानपि वितरति । अन्या कापि वदान्या स्वभूषणमंजूषिकामेव "कृष्णार्पणमिति" निगद्य पुरः सारयति स्म । एवं सभासु भाषणानन्तरं धनसंग्रहार्थं करं प्रसारयति स्वसर्वस्वहोतरि साहाय्य-प्रार्थयितरि नेतरि सुभाषचन्द्रे सर्वतः

'आकाशो ननु वर्षतीव परितः भूयः सुवर्णं स्वयम्
विष्वग्रूप्यकराशिमेव विकिरन्तीवाष्टदिग्देवताः ।
सूतेऽसाविव रत्नमौक्तिकचयं भूषागणं रत्नसूः (मेदिनी)
आलोकः सृजतीव चानयति वा वातोपि भूरिश्रियम्" ।

एवं समीक्ष्य चेतांसि सन्देहान्दोलिकासुदोलयन् प्रभूतधनसंग्रहः अक्षि निमील्य उन्मीलनावधावेव भवतिस्म ।

भाषणानन्तरं सुभाषचन्द्रस्य कम्रकम्बुसुषुमाविडम्बिकन्धरार्पितकुसुम-मालानां विहितेपि विक्रये लक्षावधिरूप्यकाणि प्राप्यन्तेस्म ।

कदाचित् सुभाषचन्द्रस्य युवजननाडिधमरुधिरप्रवाहमुद्वेलयतः स्फूर्ति-दायकस्य ओजस्विभाषणस्यावसानावसरे तदीयगले विलसन्ती सद्यः पंकुल्यमान कुसुमकुड्मलकदम्बनिष्यन्दमानमकरन्दबिन्दुमेदुरा स्वातन्त्र्याध्यायारम्भोंकार सुभाषचतुष्टंकारशंकामंकुरयद्भिः प्रेंखत्षडंघ्रिसंघझंकारैर्मुखरितदिङ्मुखा प्रत्यग्र-प्रसूनमालिका विक्रयाय उपस्थापिता ।

प्रथमः "रूप्यकाणां सहस्रं"
द्वितीया "पंचसहस्राणि"
तृतीयः "पंचदशसहस्राणि"
तुरीया "पंचविंशतिसहस्राणि"
पंचमा "पंचाशत्सहस्राणि"
षष्ठः "लक्षम्"
सप्तमः "पंचलक्षाणि"

अष्टमः द्विपंच लक्षरूप्यकाणि अर्थात् दशलक्षरूप्यकाणि दास्यामि । तामेकां सुभाषकंठस्पर्शपवित्रतमां मालिकां मह्यमेव प्रदध्वं" इति कश्चित् श्रीलः प्रार्थयामास ।

वाचकाः विचारयन्तु भूतार्था यथार्थेयं घटना न तु काल्पनिकी ।

दशपैकामूल्यका सामान्यसुममाला क्व, पितृपरंपराप्रयत्नोपार्जितप्रभूत-दशलक्षद्रविणं क्व? परं सुभाषचन्द्रस्य व्यक्तित्वमेव तादृशमासीत् यत् तदंग-स्पर्शमात्रेण दशपैकमूल्यका मालिका दशलक्षरूप्यकमूल्यमितापि भवेत् ।

हा हन्त परन्तु दशलक्षरूप्यकाणि गमयित्वापि तां स्रजं संपिपाद-यिषोः तस्य श्रीनतः मनोरथः फलग्रहिर्नैव संजातः ।

अपरा काचित् श्रीमती मनोहरतत्कुसुमहारलुब्धमुग्धहृदया पुनः द्विलक्षरूप्यकाणाम् अधिकदानमुद्घोष्य तां मालाम् अक्रैषीत् । क्रीत्वा च ससंभ्रमं सादरं सधन्यंमन्यताबुद्धिं च तां मालां स्वीकृत्य अक्षिणी स्पर्शयित्वा हृदये विन्यस्य सस्नेहं परिचुंब्य सानन्दोदधिनिमज्जनमाध्राय शिरसि संधार्य आत्मानं भाग्यवतामग्रगामिनं मन्यमाना तावज्जनसभासमासादिताऽसमानमा-नादरोद्रिच्यमानाभिमाना द्वादशलक्ष १२००००० रूप्यकाणि द्वादशलक्ष-कपर्दिका इव निरालोचनं वितीर्य ब्रह्मानन्दसगन्धमानन्दममन्दमनुविन्दतिस्म साऽरविन्ददलायताक्षी । अहो प्रभावः श्रीसुभाषचन्द्रस्य । तादृशपुरुषानुद्दिश्यैव समुदलेखि महाकविना भारविना "**ननु लक्ष्मीः फलमानुषंगिकम्** । **वांछातीतफलाप्ति (धनादि) संग्रहकरी यांचा हि तेजीयसाम्**"

'पीनां' गर्देशसंमिलितसभायां कस्यचित् तरुणस्य मनसि सुभाषचन्द्राय किमपि दातव्यमित्यासीन्मनीषा । परं तस्य सन्निधे नेताजीप्रदानयोग्यं न किमप्यासीत् । परमेकं सुन्दरतमम् अवलोककलोचनमनोरमं रजततमयम् एकं पुष्पकरण्डकमा-सीत् । सः तमेव स्वकीयम् अत्यन्तप्रीत्यादराभिमानास्पदमपि करण्डं नेताजी-पदतलयोः भक्त्या प्रेम्णा आदरेण विश्वासेन विनीत्या प्रीत्या च समर्प्य "प्रभुणा रंकस्य अस्य दरिद्रोपायनमपि स्वीकर्तव्यम् संतोष्टव्यं च" इति भयभक्तिभरानतः प्रार्थयामास । सुभाषचंद्रोपि तस्य खलु तरुणमित्रस्य क्षुद्र-तमोपायनमपि सानन्दं ससन्तोषं सबहुमानं ससाधुवादोद्गारं च स्वीकृत्य सभायां प्राह "

ममायं सुहृत राष्ट्रकार्यार्थमेवं राजन्तं राजतकरंडं प्रायच्छत्। अस्याः किल रौप्यमय्या पुष्पकरंड्याः मूल्यस्य अल्पीयस्त्वेऽपि एतत्प्रदातुः मानसिकं राष्ट्रप्रेम अमूल्यमेव वर्तते । एतां सुहृत्समर्पितां करंडिकाम् राष्ट्रीयनिधि-भरणाय अहं चिक्रीषामि । अतः श्रीमद्भिः एतत्करंडिकामूल्यानुरूपं न, परंतु तत्प्रदातृहृदयान्तरालोद्भिद्यमानराष्ट्रभक्तेः यथायोग्यं भवेत् तावद्धनं प्रदाय देशाभिमानप्रतीकमिव स्थितमेतत्करंडं स्वीकृत्य प्रदर्शनीया च अस्मत्कार्यविषये आदृतिः" इति । एकः धनी" कियति वा द्रविणे प्रदत्ते श्रीमतः भवतः मानसिकी तृप्तिः तुष्टिः समाधानं भवेत् । कियतां रूप्यकाणां योग्यं भवेदेतद्भाजनम् इति पप्रच्छ ।

सुभाषः— एतन्मूल्यस्य पंचविंशतिरूप्यकत्वेऽपि परामृष्टासु एतत्प्रदातृमनोभक्तिभावनासु एतत्करंडकं यः कोपि पंचविंशतिसहस्ररूप्यकैः क्रीणीयात् तदा योग्यं भवति मनश्च संमाहितं भवति । धनी—तर्हि मया तस्य पुष्पकरंडकप्रकांडस्य भवत्करपुण्डरीकराजहंसायमानस्य पंचाशत्सहस्ररूप्यकाणि वितीर्यन्ते गृह्णंतु अनुगृह्णन्तु च मामिति

तदा सुभाषः आश्चर्यचकितः विस्मयस्तिमितः आनन्दमन्थरः हर्षनिर्भरः गद्गदितकंठः बाष्पाविलदृष्टिश्च क्षणमातिष्ठद् अतितुष्टः

*          *          *          *

एकदा सुभाषबाबुः रंगूनतः क्वापि कार्यान्तरार्थं निर्जिगमिषुरासीत् । बहव एव पुरप्रमुखाः तत्प्रयाणसुखाशंसनाय विमानविश्रान्तिस्थानम् उपागच्छन् । विमानाभिनिष्क्रमणाय कतिपयनिमेषावकाशः आसीत्। तदा नेताजी महाशयः स्वप्रेषणार्थमागतान्नागरिकान्प्रत्याह "मम इदानीं २०००० रूप्यकाणाम् आवश्यकता वर्तते" इति । तदा तत्राऽगताः तावन्त एव जनाः विमाननिर्गमनादर्वागेव एकादशनिमेषावधावेव द्विलक्षधनं मेलयित्वा तस्मै समार्पयन् विनयनम्राः । तं च चंचलचंचलाचंचनावधावेव संचितं द्रविण-

राशिम् उदंचद्रोमांचकं चुकितकलेवरं स्वीकृत्य कृतज्ञताभरनम्रमस्तकमभिनन्य आनन्दमन्थरपदं गत्वा विमानमारुहन् सगद्गदमुदगारीत् वंगमंगलः सुभाषः—

"अहो धन्यासि भारतमातः यस्याः! परदेशवासिनामपि पुत्राणां मनसि सर्वदा जागर्ति एतादृशः देशाभिमानः, त्यागबुद्धिः स्वमातृभ्रातृप्रेमभावश्च"

० ० ० ऽ

सुभाषचद्रस्य जन्मदिवसः समीपगत आसीत्। आझादहिंन्दसर्वकाररय अर्थसाचिवः एवमेकां प्रकटनां प्राचीकटत् "सुभाषजन्मादिने नेताजी-महात्मनः सुवर्णतुलाभारः चिकीर्ष्यते। अतः हेमवत्सः सर्वा अपि प्रजाः समुपस्थित्य यावच्छक्यं साहाय्यमारचय्य सुभाषजन्मोत्सवसमारंभं यशस्विनं विजृम्भयन्तामिति। तदाकर्ण्य आलोक्य अवगत्य आदृत्य अभ्युपगत्य प्रयत्य अन्विष्य स्वस्वयोग्यतानुरूपम् अथवायोग्यतामतिक्रम्यापि सुवर्णविकारान् नैकानेवालंकारान् विक्रयेण ऋणेन याचनया आग्रहेण वा आदाय संपाद्य आनीय च सर्वेऽपि जनाः जन्मजयन्तीमहोत्सवप्रदेशमुपासदन्। तत्र च एकस्यां घटायां शक्तिमन्दिर—भीमबन्धुर—कामसुन्दर—सुभाषचन्द्रै समारूढे, अपरस्यां गगनगामिन्यां सुविशालघटायां केतकीकुसुमसवर्णवर्णवर्णनीयसुवर्णमयानि आभरणानि गृहीत्वा अहंपूर्वम् अहंपूर्वम् इति अहमहमिकया पुरःसृत्य शशांकाहंकारसर्वंकषान् नैकान् ताटंकान् करपंकेरुहालंकारान् कंकणगणान्, झंकुर्वत्किंकिणीकिलकिंचितांचितकांचनकांचीकलापं मंजुलशिंजानमंजीरपुंजान्, चंचच्चामीकरचारुचन्द्रहारान् ललनाकुलकुचकलशलुलितलालितलल्लुलन्तिकाः, मणिमुक्ताफलप्रत्युप्तरत्नवलयान् अनन्तभोगिफणामणिकान्तकान्तिलसच्छ्रीमत्सीमन्तिनीसीमन्तमणीन् मंगलमयपरिणयादिशुभप्रसंगेषु अनंगभावोतरंगप्रणयिद्वन्द्वाभंगुरप्रेमसाक्षीभूतान् अगुलीयकसंघान्, नैका एकान्तमनोरमा एकावलीः अनन्ता विलसतीः वैजयन्तीः अनर्गलपरिगणनीयानि अंगदानि असंख्यान् सुवर्णशृंखलान् अन्यान् विविधालंकारान् निक्षिप्य नामापूर्यच अतूतुलन् महाकायं भक्तियुक्ताः प्रजाः। अचिरादेवच बलिष्ठ—स्थविष्ठ—द्राधिष्ठ—गरिष्ठ—वरिष्ठभीमकाय-

सुभाषाधिष्ठितः घटः भुवमुत्सृज्य अंवरतले अलम्बत । स्वर्णाभरणाकीर्णोऽपूर्णः अपरघटः प्रभूतभूषणभारत्तु नः दृढमेव भूपृष्ठे व्यतिष्ठत् । तदा तदालोकमाना हर्षप्रकर्षनिर्भरा भक्तिभारभरिता जनता सान्द्रानन्दमन्दीभूतमन्द्रस्वरभेदुरां गिरमुदगारीत् सगद्गदंसजलनयनकमलं च

**" महात्म—श्रीगोखले—तिलक—नहरू—वल्लभमुखैः**
**अलभ्यं ह्यऽहिंसात्मकविविधसत्याग्रहशतैः ।**
**स्वराज्य स्वातंत्र्यं सपदि परवद्भारतभुवां**
**ददानः केनासि त्वमिह तुलनीयः कथय नः । "**

सुभाषोपि घटादवतीर्य स्वसमर्पितं प्रभापुंजपिंजरितदशादिशम् आभरण राशिमुद्वीक्ष्य स्मेरोत्फुल्लगल्लः जनताजनार्दनमानन्द्य अभिनन्द्य अभिवन्द्य आभाणीत् " श्रीमाद्भिः राष्ट्रप्रेमवद्भिः धीमद्भिः आभरणराशिमेव वितरद्भिः सुवर्णवृष्टिमेव कुर्वद्भिः अत्रभवद्भिः भवद्भिः सुवर्णभारेण मां तुलयद्भिः नितरामनुगृहीतोस्मि, अधमर्णीकृतोस्मि अत्यन्तमुपकृतोस्मि । वस्तुतः अनेन खलु तुलाभारव्यतिकरेण श्रीमतां समेषां राष्ट्रप्रेमैव तुलितं परीक्षितम् । अन्ते च अनेन निस्तुलम् असदृशं चेति निर्धारितं निर्णीतं प्रकाशितं जगतः एव अवगतं चाभूत् । एतां च श्रीमदुपज्ञां भूयसीं महीयसीमपारां च श्रीसंपदं अस्मत्प्रतिष्ठितस्वतंत्रहिंदुस्थानसर्वकारस्य महाकोष ( ब्यांक ) वशवर्तिनीं विधाय राष्ट्रकार्यार्थमुपयुंज्महे । नाहं मदर्थं गुंजामितमपि सुवर्णशकलं गृहीतुमिच्छामि अस्मात्सुवर्णाचलात् " इति । अहो निस्पृहता निस्वार्थता निर्लोभिता उदारता राष्ट्रकार्यैकव्यसनिता च नेताजीवीरवरस्य !

## " सुमं सुमनसः संगाद् असमं वसुधातले "

एकदा सुभाषसु—भाषणावसाने सवन्मधुसीकरस्नपितोरस्थला तत्कण्ठेमाला विक्रयाय निष्कासिता । लक्षत एव प्रारब्धः व्यापारः

एकः एकलक्षम् द्वितीयः द्वेलक्षे तृतीयः त्रीणिलक्षाणि चतुर्थः

लक्षचतुष्टयम् पंचमः लक्षपंचकम् ।

तत्रैकः कोट्यधीश्वरः तरुणः निमेषालसपक्ष्मपंक्तिः सप्रत्याशं विक्रेतृनेतृकरांगुष्ठतर्जन्यन्तर्विवर्तमानां, सौगन्ध्येन भृंगानिव सभासत्सधानन्याकर्षन्ती कुसुममालामेव निरीक्षमाणः अत्युत्कटप्रबलजिघृक्षाप्रणुन्नोपि तत्प्रार्थयितृबाहुल्यात् स्वकीयजिघृक्षामपि श्रावयितुमपारयन् धैर्यतः पुरस्सृत्य उद्घोषितवान्

षट् लक्षाणि

अन्यः धनधन्यः धन्यप्रणीः सप्तलक्षाणि

| | |
|---|---|
| तरुणः | लक्षाष्टकम् |
| अपरः लक्ष्मीपुत्रः सश्रीमदं — | दशलक्षरूप्यकाणि |
| तरुणः सत्वेषं— | पंचदश....— |

कोपि कमलाविलासमदिरोन्मीलन्मदाघूर्णितः श्रीलः— विंशतिल.... ....... तदा विप्रकृतः पन्नग इव फुत्कुर्वन् सेर्ष्यं सक्रोधं प्रर्जन्यस्फूर्जथुमपि तर्जयता अत्यूर्जितेन सिंहगर्जितेन तरुणः उदजूघुषत्

मम सर्वस्वम्....

तच्छ्रुत्वा सदस्सद आश्चर्यचकितचित्ताः नासाग्रमस्पृशन् अंगुल्या । सुभाषोऽपि सुविदिततत्तरुणापारश्रीसंपत्समृद्धिः अदशदाश्चर्येणांगुलीदलम् । एवं चित्रितचेताः आश्चर्यचकितः विस्मयस्तिमितः चमत्कृतमानसः स्तम्भितबाष्परुद्धकंठः पुलकितगात्रः हर्षप्रकर्षप्रकर्षमूकः सादरं सस्नेहं सानन्दं सकृतज्ञताभरं सबहुमानं च तत्समीपम् आधाव्य आश्लिष्य आलिंग्य आचुंब्य तत्पाणिमान्दोल्य च " धन्योसि, अथवा त्वदपेक्षयापि त्वत्प्रसवित्री भूतधात्री एव भवादृशपुत्ररत्नेन सविशेषं धन्या । यथार्थीभवति चास्याः रत्नगर्भेति नाम त्वादृशैरेव पुत्ररत्नैः । न कदाचिदप्येनमुपकारभरं विस्मरति आझादहिन्दसर्वकारः इति संश्लाघ्य साधुवादोद्गिरणपुरस्सरं पुनःपुनरास्फालयामास प्रमोदभरकंटकितं तत्तरुणपृष्ठतटम् । साधु साध्विति हर्षोद्गारमाविष्कुर्वदपरिमितश्रोतृस्तोमस्य प्रचंडकरताडनकडूकडूद्ध्वनिमध्ये तां स्रवन्मधुसारां सुमस्रजं तत्कंठे निवेशितवान् तदा " विनयेन कृतज्ञताभरेण च

## अत्राङ्मुखस्योपरि ( स्तुति ) पुष्पवृष्टिः पपात विद्याधरहस्त [ वक्त्र ] मुक्ता

ततः परस्मिन् दिने स्वस्य संपूर्णैश्वर्यस्यैवोपरि तुलसीदलं निधाय सर्वस्वं निवेद्य श्रीमत्वादधिकतरेण ज्यायसा दारिद्र्येण अशोभत सः लक्षाधीशोपि भिक्षापात्र-मवलम्बमानः तरुणः। " तनिन्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः। रंगून-पत्तनस्य सुप्रसिद्धः वाणिज्यव्यापारकौशली संपादितप्राज्यसंपत्तिः मुस्लीम-जातीयः कोटीश्वरः। कदाचित् नेताजीमहाशयस्य सन्दर्शनार्थम् आगच्छत् औपचारिकालापानन्तरं " अस्माकं किमपि वा कर्तव्यं कार्यं वर्तते किं युष्माकं अझाद्‌हिन्दसर्वकारार्थं ? इत्यपृच्छत् यवनश्रीकान्तः।

" आम् " नेताजी उवाच " आझादहिन्दसर्वकारे मुख्यामितरासाध्यं कार्यं भवद्भिरेव संपादनीयम्। भवादृशैरेव अस्माकं सर्वकारः स्थेमानमा-लंबते। इदानीं अझादहिन्दसर्वकारीयसकलव्ययनिर्वाहार्थं एकः सर्वकारीय-महाकोषः ( गव्हर्नमेंट ब्यांक ) संस्थापनीयः वर्तते "

यवनलक्ष्मीपुत्रः— तद्‌ब्यांकस्थापनार्थं कियद्‌द्रव्यम् अपेक्ष्यते ?

सुभाषः—५०००००० पंचाशल्लक्षमितः धननिधिः प्रारंभे आवश्यकः।

यवन-कलियुगकर्णः— इदानीं मम सविधे ३०००००० त्रिंशल्लक्ष-रूप्यकाणि विद्यन्ते। तावत् प्रदास्यामि अधुना। उर्वरितविंशतिलक्षम् एकवारावधौ सप्तदिनाभ्यन्तरे मेलयित्वा समर्पयिष्यामि "

इत्युक्त्वा ततो गत्वा निर्दिष्टावधौ पंचाशल्लक्षरूप्यकराशिं सुभाषस्य पुरस्तात् अवस्थाप्य भीत्या भक्त्या विनीत्या आदृत्या प्रीत्या च भरितः कृतांजलिपुटो भूत्वा कैकर्यमवलंब्य किं ते भूयः प्रियमुपहरामीति " वदन्नातिष्ठत्।

ईदृशः असाधारणो भाग्यवान् अनुपमचरितः श्रीसुभाषचंद्रो जीवती-त्येव निश्चयेन केचन वदंति। केचन संशेरते परमयं नेतृप्रवर आचन्द्रतारकं यशोभास्वरश्चिरं जीवी अचिरादेव सर्वेषां चक्षुर्गोचरः स्वतंत्रां भारतमातरं प्रीणयतादिति त्याशास्महे।

———

## श्रीसुभाषचन्द्रस्य बर्लिनप्रयाणविषयिका

# अद्‌भुतकथा

### सुभाषो न जीवति

स्वतंत्रभारतस्य प्रथमतः सेनापतिर्नेतृवरः श्रीसुभाषचन्द्रबोसमहोदयो जपानदेशे विमानापघातेन सत्यमेव स्वर्गमगात् उत नेति विषयो नाद्यापि निश्चयेनाधिगंतुं शक्यते। अद्यापि गूढोऽयं विषयः। तत्संबंधेन विविधा वार्ताः सत्याभासाः तद्वार्तोद्भवदिनादारभ्य अद्य यावत् प्रसृता नवनवा इव जनश्रुतिगोचरा भवंत्येव। तत्समालोचने क्रियमाणे महान् ग्रन्थ एव भवेत्। तास्ता वार्ता नेतृप्रवरसान्निध्यजुषां लोकानां सकाशात उपलब्धाः प्रकाशिता इत्येतत्कारणेन विश्वसनीया एवेति विचारः स्वाभाविकः प्रतीतिविषयो भवति। परं तासु परस्परं विरुद्धासु विमर्शविषयतामापादितासु संशय उत्पद्यते। परमेतत्सत्यं यः कोपि वा विश्वासार्हः पुमान् प्रत्यक्षतस्तमवलोक्य तेन सह संभाष्य संप्राप्त इति नावगम्यते। अस्मिन्समये बहवो जना अपघातेन तं मृतमवगच्छंति। तथापि महात्मा गांधीमहाभागः श्रीसुभाषो बाढं जीवतीत्येव मे द्रढीयान् विश्वास इति स्वाभिप्रायमाविष्करोति। महात्मनोस्यानेनाभिप्रायेण बहवो मानयंति किलैवं महात्मन आधारमंतरा अंतरात्मा नैवं निरूपयेत् इति। एतेन कारणेन सुभाषो जीवतीत्येवेति जनानां दृढो विश्वासो वज्रलेपायते। परं श्रीमान् कालांतरे वा तत्स्थानार्हो जवाहिरलालनेहरूमहाभागः श्रीसुभाषचन्द्रः सत्यमेवापघातेन मृतो न जीवतीत्येव प्रकटतया स्वमतं प्राकाशयत्। तथाच स अमुकदिवसे प्रकटीभविष्यतीत्यादिवृत्तान्ते न विश्वसेदिति च प्रत्यपादयत्।

### परमितरे किं वदन्ति

श्रीमान् पं, नेहरूमहोदयः कर्नलहबीबूररहिमानस्य साक्ष्यं पुरस्कृत्य

सुभाषस्य मृत्युविषये स्वाशयमाविष्करोति । तथापि जनानां संशया न दूरीभवंति । यतः कश्चिदपरो लेफ्टनंटरहिमानखानः पुरो भूत्वा यदि कंचिदन्यमेवोदंतमावेदयेत् तर्हि हबीबूररहिमानस्य साक्ष्यं संशयास्पदं भवत्येव । एवं सयुक्तिकं मार्मिकं चिकित्सात्मकं विचारं श्रीमान् डॉः हेमेंद्रनाथदासगुप्तमहोदयः प्रकाशयांचक्रे अचिरादेव प्रकाशिते विस्तृते श्रीसुभाषचन्द्रचरित्रग्रंथे । अपिच १४ आक्टोबरतारके पाटणानगरे अ. भा. पुरोगामिपक्षाध्यक्षः श्रीशीलभद्रयाजीमहोदयः पं. नेहरूविचारान् खण्डयन् विद्यमानः श्रीसुभाषचन्द्रः सदेह एवाचिरात् प्रकटो भविष्यतीति निस्संदिग्धमावेदयत् । श्रीसुभाषचन्द्रबोसमहोदयः प्रत्यक्षमेव बहुजनसमाजस्याग्रतो यदि प्रकटो भवेत्तर्हि एव संशयो नश्यति । तावत् द्विविधवार्तया उद्भवस्यावकाशो भाव्य एव ।

ब्रिटिशसर्वकारानिर्बंधात् कलकत्ताराजधानीतः पलायनं यथा परमं रहस्यं तथैवच विमानापघातान्मरणमपि गूढतरमेव । वयमिदानीं कलकत्तानगरतो निस्सृत्य श्रीसुभाषचन्द्रमहोदयः अंतर्हितः अकस्मादेव काबूलमार्गेण बर्लिन्राजधानीं प्रति कथं जगाम इत्येतं रोमांचकारि वृत्तं प्रियपाठकेभ्यो निरूपयामहे । परं वृत्तमिदं भूतार्थं उत कल्पितं स्यादित्येतस्य निर्णयः प्रत्यक्षसुभाषवचनश्रवणमंतरा नैव भविष्यति । तावदिदं वृत्तं कल्पितमपि भवितुमर्हेत् । कथमपि वा अस्तु परमिदमाश्चर्यावहं सुंदरं च सत्यमेवेति निर्धारितं भवेदिति मन्यामहे ।

## कलकत्तातः अंतरधात्

परं वयमिदानीं तन्निर्धारणमकुर्वाणाः श्रीलालाउत्तमचन्द्रलिखितं सद्यस्तदितिहासं सत्यं मन्यमाना नेतृप्रवरसुभाषस्य अद्भुतं रमणीयं च वृत्तांतं प्रयाणविषयकं संप्रति निरूपयामहे ।

दिशांबरे १९४० यावत् पंचसु मासेषु सुभाषचन्द्रः अलीपुरकारागृहे अतिष्ठत् । तत्र स्थिते तस्मिन् प्रागेव कृतस्य भाषणद्वयस्य विषये सर्वकारः

अभियोगमारचयत् । २५ नवांबरे १९४० दिनांकादारभ्य श्रीसुभाषचन्द्रः अन्नपरित्यागमारब्धवान् । तदानीं स बंगालप्रधानाधिकारिणे (गव्हर्नर) पत्रमेकं विलिख्य प्राहिणोत् । तत्रच अन्नपरित्यागेनात्मबलिदानमहं करोमीति । तथानेन बलिदानेनैव भारतमुत्थापितं भवेदिति तत्वार्थे प्राणार्पणमिदं मम अनुपममसाधारणं मनस्समाधानकारणमिति च तत्पत्रे निरूपितवान् । उपवासारंभे सप्तसु दिवसेष्वेव अतिशयेन शक्तिरहितोऽभूत् । तस्यसातिशयं शक्तिन्हास-मवलोक्य आत्मनः अपकीर्तिप्रसंगो मा समापततु इति ९ दिशांबरे सर्वकारस्तं कारागारादमोचयत् । ततो वैद्याः पाश्चात्यपद्धत्या शिक्षिताश्चिकित्सकाः सुभाषं द्रष्टुं सर्वेषामप्यवकाशमेव न प्रायच्छन् । स्वजनानामप्यगोचरो दृष्टेः सुभाषचन्द्रः एकमासपर्यंतं गृहैकदेशे कोष्टे मंजूषायामिव प्रतिबद्ध आसीत् । तदवसरे स अन्तर्गृहे किं करोतीत्येतद्ववमंतरा न कोप्यपर अजानात् । परमेवं तर्को यथा स तदवसरे एव स्वपलायनविषयं सम्यगालोचयदिति । यतः अद्य न चेदपि दिनचतुष्टयादन्तर्बहिर्वा संजातमारोग्यमवगम्य सर्वकारो मां प्रतिबध्य प्राक्कृतान् अपरानप्यपराधान् पुरस्कृत्य अभियोगमारचयत्येव । भारतजानपदमहा-सभातोपि (कांग्रेस) बहिष्कृतोहम् । जगति च महद् युद्धं प्रवृत्तमेव । अतः अस्मिन्नेव समये कथमपि साहसं कृत्वा इतः पलायनं कृत्वा परदेशमा-श्रयेयम् । इंग्रजेषु विपदः समुत्पाद्य तद्दास्यभावात् मातृभूः उन्मोचनीया तदर्थे प्राणानपि संकटे निपात्य महान् प्रयत्नआचरणीय इति मनसि स महोदयो निरधारयत् । सर्वकारस्य रक्षापुरुषेषु सर्वतो निक्षिप्तचक्षुष्षु जागृतेषु चारप्रवरेषु लोचनयोस्तैलं निक्षिप्य प्रेक्षमाणेषु खल्वपि ९।७।१९४१ जानेवारीदिनांके श्रीसुभाषचन्द्रः अकस्मादेव सर्वाविदितः अन्तरधात् । अवरंगजेबचक्रवर्तिनः कारागृहाद्दिल्लीतो यथा श्रीशिवच्छत्रभूपतिरकस्मादेव समभवदद्दश्यस्तथैव सुभाषोप्यदृश्यतामयासीत् ।

## अपघाणसीम्नि प्रविष्टः

ततश्च विविधास्तर्का उदपद्यन्त । सत्यवृत्तांतं न कोप्यज्ञासीत् । तत एक

उदंतो वृत्तपत्रेषु प्रकटितो यथा स प्रथमं बरद्वानं गत्वा पंजाबमेलनाम्न: धूमशकटेन प्रयात इति । एतस्मिन्कर्मणि एक: कोपि पंजाबदेशः शीख उग्रवादिपक्षीय: तस्य सहायको बभूवेति । १५ जानेवारीदिनांके निशीथाद-नंतरं एकघण्टावादनावसरे लखनौस्थमौलवीमदृक्षं वेषमास्थाय सुभाष: कलकत्तात: स्वगृहात् बहिर्निस्सृतवान् । स वेषश्चत्वारिंशद्दिवसान् यावदक्षौर-कारणेन रूढश्मश्रूपयोगो यावनत्वं संपादयितुमनुकूलोऽभवत् । बरद्वाननगरे (सेकण्डक्लास) उच्चवर्गीयस्थानमेतदर्थे एव यथा व्यवस्थितं स्यात् तथा प्रागेव प्रयंतितमपि । १७ दिनांके स पेशावरमगच्छत् । तत्र स आत्मनो नामधेयं **मौलवीझियाउद्दीन** इत्याख्यातवान् । पेशावरे स अब्बासनाम्न: कस्यापि गृहस्थस्य गृहे दिनद्वयमुवास । १९ तमे तारके पठाणवेषमंगीकृत्य कंचन तद्देशपरिचितं मार्गदर्शिनं गृहीत्वा तेन सार्धं मरुत्तरयाने पदं निहितवान् । अयं सहायको नाम्ना भगतराम इत्यासीत् । सोपि यावनोचितं रहमनखान इति नाम जग्राह । जमरूडं तथा लण्डी-कोटलं दुर्गमुल्लङ्घ्य गढीनामकं स्थानविशेष-माप्नुवताम् । तत्र तौ मरुत्तरं पर्यत्यजताम् । तां रात्रिं तत्रैकस्मिन् गृहे यापयित्वा प्रात: पद्भ्यामेव गंतुमारभताम् । तस्मिन्नेव दिवसे संध्याकाले द्वयो: सशस्त्रयोरपघाणदेश्ययो: साहाय्येन भारतसीमानमुल्लंघ्य आफ्रिदीप्रांते पदं न्यधत्ताम् ।

## बर्लिने प्रकटितोऽभूत् ।

श्रीसुभाषचन्द्र एकस्य महत: खानमहाभागस्य प्रशस्तिपत्रमेकं हस्ते जग्राह । तस्मिन्पत्रे द्वाविमौ माननीयौ मुस्लीमौ यात्रार्थं जिगमिषू स्त: । एतयोस्साधुत्वविषये अहं प्रतिभूरस्मि इति लिखितमासीत् । तेन तयोर्मार्गे न कोप्यंतरायोभूत । ततोग्रे काबूलनदीमुत्तेरतु: । ततश्च विशालं पंथानमा-श्रयताम् । ततो मरुत्तरयानप्रवास आरब्ध: । तदानीं झियाउद्दीनोयं नाम श्रीसुभाषचन्द्र: एडमूकवेषधारी आत्मानमवाचं बधिरं च ख्यापितवान् । स इवान्वतिष्ठत् । भगतखानश्च तस्य भ्राता बभूव । तौ काबूलं प्राप्तौ । तत्र

न कस्यापि परिचय इति बुद्ध्या मरूत्तरस्थाने एव कस्मिन्नपि भोजनालये न्यवसताम् । तत्रच अपघाणसर्वकाररक्षापुरुषस्यैकस्य एतस्य विषये संशय उदभूत् । तदानीमेव चतुरस्तस्मै रक्षापुरुषाय गुप्तरीत्या धनं प्रदाय तन्मुख-बंधनमकरोत् । सोपि तावता संतुष्टस्तूष्णींभावमभजत् । एतस्मिन् प्रदेशे रहमतखानः काबूलस्थरशियन्वाक्कीलगृहस्य समंतात् अपघाणसर्वकारीया रक्षापुरुषा इतरेषामप्रवेशनिमित्तेन जागरूका रक्षंतिस्म । एवं सत्यपि एकदा रहमतखानः सुभाषेण सह गच्छन् पथि मरूत्तरयानेन प्रयातं रशियन्-वाक्कीलं मध्येमार्गमवरुध्य श्रीमन् वीरोयं श्रीमान् सुभाषचन्द्रमहोदयः । एनमादाय भवान् मास्कोनगरं गच्छतु इति अनुनयन्नवादीत् । परं स वाक्कीलो न विश्वासमदर्शयत् । तत्र तत्र स्थितयोरेतयो रक्षापुरुषाणां त्रासो विशेषो बभूव । ततस्तु एतावुभौ रेडियोव्यापारनिरतस्य श्रीमतो लालाउत्तमचन्दस्य शोधमनु-विधाय सुखिनावभूताम् । ततः सुभाषचन्द्रस्तस्मिन्नेव सुखमुवास । स उत्तम-चन्द्रमहोदयः सुभाषं स्वगेहे ४५ दिवसपर्यंत यावत्सुगुप्तं समरक्षत । अनेकैरुपायैः प्रयत्य इटालियन्वाक्कीलस्य तत्पत्न्याश्च साहाय्येन रोमनगरं बर्लिननगरं गंतुं अनुमतिपत्रं सम्पाद्य प्रायच्छत् । अनुमतिपत्रं ( पासपोर्ट ) हस्तगतं कर्तुं एकमासावधिः कालोऽगच्छत् । ततश्च १८ मार्च १९४१ तमे दिवसे डॉ. वेलर्सनआदि जर्मनदेश्यकार्यालयाधिकृतयोः एकस्य इटालियन्कार्या-लयाधिकृतस्य च साहाय्यमादाय सुभाषो रशियाप्रदेशं गंतुमुद्यतोऽभूत् । अपघानदेशस्य रशियादेशस्य च मध्ये सीमानिर्णयो यया नद्या भवति तत्र तीरे भगतरामाय स्वदेशं गन्तुमन्वमोदत । एकाकी च पुरतो जगाम । स २७ मार्चमासे दिनांके मास्कोनगरमागात् । जर्मनसर्वकारस्तत्र तदर्थे स्वतंत्रमेवैकं विमानं प्रास्थापयत् । तेन च ततो बर्लिननगरे वृत्तपत्राणि " सुप्रसिद्धो भारतनेता श्रीमान् सुभाषचन्द्रबोसमहोदयो जर्मनराजधान्यां प्रकटो बभूवेति " आश्चर्यावहां वार्तां प्राकाशयन्निति ।

———

## वीरवनितासेनाधिनायिका

# कॅ. लक्ष्मीदेवी



श्रीमान् वीरप्रवरः श्रीसुभाषचन्द्रमहोदयो भारतस्वातंत्र्यकृते परमाद्भुतं रोमांचकारि यत्साहसमकार्षीत् तत्र वीरयुवतीनां अविचलहृदयानां परारातिहृदयविदारणे बद्धपरिकराणां सहस्राधिकानां सैन्यमेकं निर्माय तस्य झांसीलक्ष्मीदेव्यां उदात्तं नाम प्राख्यापयत् । तत्सैन्यस्य च प्रधाना नियंत्री धीरा महोदारा चतुरा वीरा च देवी लक्ष्मीनाम्नी । इयं किल भारतीया ललनाः पृष्ठतः न पलायंते किंतु करकलितकरवाला रिपुरुधिरासारेण धरणीं प्लावयितुमग्रेसरा भवंति। भारतीयानाम् ललनानामियं परंपरा चिरादेव पुराणकालादारभ्य अथवा वेदकालादारभ्यापि भारतरामायणादीतिहासेष्वपि कीर्तिमत्वेन सुप्रसिद्धा इत्यत्र नास्ति सर्वथा संशयलेशः । महाराज्ञो दशरथस्य धर्मपत्नी हृदयवल्लभा कैकेयी सुरसाहाय्यं कुर्वाणस्य असुरसेनाप्रहारपरायणस्य सतः महति संग्रामे रथाक्षे भग्ने स्वकीयेन बाहुना रथधुरं धृत्वा यदप्रतिमं शौर्यमदर्शयत्

Funding: IKS/Tattva Heritage. Digitization: eGangotri.



तद्रामायणे सुप्रसिद्धमेव । श्रीमती यदुकुलोत्तमपत्नी सत्यभामा पारिजातापहरणप्रसंगे प्रोत्साह्य भगवंतं चक्रपाणिं गरुडारूढा वीरवैरैरमरेश्वरैः सह युद्धमनुष्ठाय विजयशालिनी समभूदिति कथा सुप्रसिद्धा । रणचण्डा भगवती दुर्गादेवी महिषासुरमर्दिनी कस्य वा वीरपुरुषस्य वीरयोषितो वा न स्फूर्तिमुत्पादयति ।

एवं महाभारते कुंतिभोजसुता पाण्डवजननी पृथादेवी पंचग्रामलाभेन तुष्टिमावेदयितारं युधिष्ठिरमुपश्रुत्य भगवतो भक्तवत्सलस्य यदुकुलोत्तमस्य मुखेन विदुलासंजयोपाख्यानमुपादिश्य उद्योगपर्वणि यं सन्देशमहार्षीत् स कस्य वा पुरुषस्य योषितो वा न मनः समुल्लासयति वीर्यं न संजनयति पराक्रमं नोद्भावयति च । वैरप्रतिमोचनाय च न प्रोत्साहयति लोकान् । महाभारतस्याधिनायिका द्रुपदतनया कृष्णा यद्वीररसोल्लासिवचोजालमुद्गिरति तदवलोकयंतु किल कर्णे कुर्वंतु बत महाभागाया वीर्यवत्तामनुभावयंतु हृदये । सहस्रशो वीरवनिता रजपूतरमण्यो अगणयंत्यो हि आभिजात्यं यवनकंठनालानि कर्तयंत्यो रुधिरासारैर्वर्षयन् वसुंधराम् । महाराज्ञी झांसीलक्ष्मीदेवी नवयुवतिरपारधैर्यधरा १८५७ मिते खिस्ताब्दे यदविस्मरणीयं शौर्यं प्रदर्श्य कीर्तिमात्मीयामाचन्द्रतारकस्थायिनीं चक्रे । कर्णाटकविभूषणा वीरकंपदयिता गंगादेवीमल्लम्मकित्तूरचन्नमाप्रभृतयो नारीमणयोऽपि वीरपुरुषेभ्योऽपि विस्मयावहं चरित्रमुपादर्शयन्नसाधारणेन समरकर्मनैपुण्येन । ताभ्योऽपि विशिष्टयमदृष्टशालिनी मद्रदेशीया तरुणी लक्ष्मीः । तस्या अल्पपरिचयमुपपादयामो वाचकहृदयोल्लासाय ।

स्वामिनाथनकुलमतिप्रसिद्धं विविधकलाविलासप्रोल्लासि समृद्धैश्वर्यं किल कुलं मद्रपुरे । **डॉ. एस्. श्रीस्वामिनाथन्** महाभागो मलबारदेशीयो ब्राह्मणः सुप्रसिद्धो वाक्कीलप्रवरः लक्ष्म्या अस्याः जनकः आंग्लदेशे विश्वविद्यालये एल् एल्. डी. पदवीविभूषितश्चासीत् । कु. लक्ष्म्या जननी च सुप्रसिद्धा **अम्मूस्वामिनाथन्** महाभागा कांग्रेसकार्यकर्त्री १९४२ तमान्दोलने कारागृहवासमनुबभूव । गर्भैश्वर्यसमृद्धापि वीरा भामिनी आसन्न

पंचाशद्वत्सरवयस्कापि मद्रासपत्तनमुखात् मद्रप्रान्तीयविधिमण्डले प्रतिपक्षि-पराजयपूर्वं यशस्विनी प्रचण्डेन प्रबललोकमतेन नियुक्ता विजयशालिनी समभूत् । अस्या महाभागाया ज्येष्ठा तनुजा एव वीरवनितासेनानियंत्री लक्ष्मीदेवी । अपरा च तनया मृणालिनी अमदावादनगरे सुप्रसिद्धस्य वस्त्र-निर्माणयंत्रमहामंदिराधीश्वरस्य धनाढ्यस्य श्रेष्ठिनः अम्बालालसाराभाईमहो-दयस्य तनुजन्मना परिणीता । श्रीअम्मुस्वामिनाथन्महाभागाया द्वौ पुत्रौ चासाते । तयोरेकः श्रीगोविंदरायनामा तरुणो वाकीलव्यवसायं मद्रनगरे करोति । अपरः श्रीकृष्णन्नामा कलकत्तानगरमाधिवसति । द्वावपीमौ लाहोरनगरनिवासिनः पंडितस्य श्रीमतः संतानमनाम्नो महाभागस्य जामा-तरौ स्तः । बाल्ये पितृवियोगेन लक्ष्म्याः संवर्धनादिकं सर्वमस्या जननी एव चक्रे ।

बाल्ये एवेयं चपला बाला निशितमतिरतिचतुरा चेति शालासु कीर्तिम-वाप । मरूत्तरयंत्रप्रचालने निरतिशयवेगेन धावने विशिष्टा प्रीतिरस्याः आसीत् । मासचतुष्टयमियमांग्लदेशेपि विद्याभ्यासार्थमुवास । इयमाधिकं प्रवास-प्रीतिरप्यास्ते । विमानविद्याविशारदेन श्री . बी. के. नंजुण्डरावमहोदयेनसमं कृतविवाहा कामं विषयोपभोगलालसा बह्वीर्निशाः सुखमयीरत्यवाहयदियम् । पत्या समं आकाशयानविहारसुखमनुबभूवेयम् । दंपती मुंबापुर्यामप्यूषतुः कांश्चिन्मासान् । ततो मद्रासनगरं प्रत्येत्य आत्मनश्चतुर्विंशतमे वत्सरे मद्रास-विश्वविद्यालयेन एम्. बी. बी. एस. पदवीमलभत । अग्रे केनापि कारणेन पत्या विवाहबंधोच्छेदं विधाय १९४० तमेऽब्दे सिंगापुरमुपेत्य तत्र वैद्यक-व्यवसायमारेभे । १९४२ तमेऽब्दे जपानदेशीयाः सिंगापुरमाक्रम्य स्ववशे चक्रुः । तदानीं तत्रत्या लोका भीतभीताः पलायंत । सिंगापुराद् बहिर्गंतु-मिमामाज्ञापयन् । परमियं तदाज्ञां तिरस्कृतवती । ३१ मार्च १९४२ तमेदिवसे तत्र भारतस्वातंत्र्यसंघः प्रतिष्ठापितः । लक्ष्मीदेवी भोगविलास-लोलुपतां विहाय वीर्यशालिनी निर्भयवृत्तिः सहस्रशो ललनाः संघटनाचतुर-तया सम्येत्य सैन्यं प्रावेशयत् ।

२२ आक्टोबरदिनांके ( १९४३ ) झांशीमहाराज्ञीलक्ष्मीजन्मदिवसे श्रीसुभाषचन्द्रः **लक्ष्मीपथकं** सैन्यं प्रतिष्ठापितवान् । तस्मिन् सैन्ये प्रवेशमभिरूपंतीनां वीरयोषितां प्रवेशसूचिपत्रे स्वाक्षरनिर्देशः तदानीं एव स्वरुधिरेणोल्लिख्य इति नियम आसीत् । तदवसरे परामियं वीरप्रवरा कृत्स्नं निवेदनपत्रं रुधिरेणैव लिखितैरक्षरैर्विलिख्य समर्पितवती । इमां वीरवनितामवलोक्य परमानंदतृप्तः श्रीसुभाषचंद्रो लक्ष्मीपथकनेत्रीमेव कृतवान् ।

एकदा भयंकरे प्रसंगे पराजय एव भवितेति निश्चित्य वीरवनितेयं सुभाषचंद्रस्य जीवनमनर्घ्यं न वृथा व्ययार्हमिति सैन्यं स्वयमग्रतो नीत्वा युद्धकलानैपुण्यमुपदर्शयंती सुभाषचंद्रस्यान्यत्र प्रयाणाय सौकर्यमुत्पादितवती । तथाच तदानीं स्वयं मित्रसैन्येन प्रतिबद्धा अभूदिति वदंति । अस्या वैद्यविद्यावैशारद्यात् शत्रुसेनाधिकारिणोऽपि एतां शस्त्रप्रहतानां सैनिकानां चिकित्साकार्येऽन्ययोजयन् । तेन कर्मनैपुण्येन अस्या उपरि अभियोगमकृत्वा भारते प्रत्यागमने अन्वमोदंत सेनानियामकाः । तत इयं ३ मार्च १९४६ दिनांके विमानमार्गेण कलकत्तामुपेत्य श्रीसुभाषचन्द्रगृहमागत्य तत्र रणजितकुमारबोस–प्रदीपकुमारबोसकुमाराभ्यां तद्भगिनीभ्यां शीलाललिताभ्यां च परमादरेण सत्कृता सुभाषोपवेशनस्थले तद्रूपप्रतिकृतिं नमस्कृत्य तत्रैव मातृदर्शनसुखमन्वभवत् ।

ततः कलकत्तातो लिल्लीनगरं दिल्लीतो मुंबापुरीं अभ्येत्य मद्रासनगरं प्रविवेश । प्रमुखपत्रिकाप्रतिनिधिभिरियं सगौरवं दृष्टा, पृष्टा च वीरसेनाधिनायिका सैनिका अहम् युद्धे शत्रून् प्रहृत्य विजयसंपादनमेवास्माकं परमो धर्म इति संदेशमदात् । धन्या धन्या धन्या इयं लक्ष्मीः ।

एतादृशेभ्यो योषिद्रत्नेभ्यो जन्मदात्री भारतवसुंधरा च धन्या धन्यतरा धन्यतमा चेत्यलम् ॥

---

# महात्मा वीरधुरीणश्चायं सुभाषचन्द्रः !

लेखकः—गणेशरामशर्मा ज्यौतिषोपाध्यायः, विशारदः, महारावल हायस्कूल संस्कृत-प्रधानपण्डितः, डूँगरपुरस्थः ( राजपुताना )

श्रीकीर्तिध्वज इव राष्ट्रसंस्कृतेर्यो;
विद्वान् भारतगगनाङ्गणे विरेजे ।
श्रद्धेयो मतिमहतां सतां वरेण्यो,
नेतासौ जयतितमां सुभाषचन्द्रः ॥ १ ॥

ये खलु महापुरुषाः कीर्तिवपुषा जगति जीवन्ति तेषां प्राकृतजनानामिव जरामरणजं भयं नास्त्येवेति सर्वजनसम्मतः सिद्धान्तः ये वा पुनर्मनीषिणो वीर्यातिशयं दधते, ये प्रौढप्रतापवन्तः सर्वतन्त्रस्वतन्त्रा अनन्यसाधारणमुत्कर्षमावहन्ति तेषां जीवनक्रमो विचित्रो भवति कार्यपद्धतिश्च तेषामसाधारणीति प्रज्ञावतामपरोक्षं नाम ।

एवंविधेषु महामहिमशालिषु महात्मसु लोकातिशायि ज्वलत्तेजःपुञ्ज-प्रभावजुष्टो वयमस्माकं चरितनायको धीरोदात्तः श्रीसुभाषचंद्रो विद्योततेतमाम् । आर्यमनीषिजनोचितैर्भव्यसंस्कारैः समुन्नतशिक्षादीक्षासदाचारविचारनिर्मलचारुचरितैस्सोऽयं विद्वान् नेतृणामग्रणीर्भारतजनन्या मुखमुज्ज्वलं तन्मस्तकं च गौरवोन्नतं चकार । वीरसूरियं भारतभूरासृष्टेर्यावधि संख्यावतः सत्पुत्रानजनिष्ट किन्त्वस्याः सुपुत्रोऽसौ सुभाषचन्द्रः क्रान्तेरग्रदूतः कामप्यपूर्वामेव भास्वरश्रियं दधानो जनजागृतिमुन्मेषयितुं प्रौढप्रतापशंखनादं दध्मौ ।

भीष्म इव दृढप्रतिज्ञो बालब्रह्मचारी वपुष्मान् वीरधर्म इवापरः समूर्जस्वलं शौर्यातिरेकं पुष्णन् सर्वत्राप्रतिहतगतिर्भारतराष्ट्रं स्वातन्त्र्यसंग्रामांगणे निर्भयं बभ्राम । निसर्गशूरः सर्वतंत्रस्वतंत्रोऽयं वैदेशिकदस्यूनुद्धर्षयन् रणेऽर्जुन

इवामोघमस्त्रं प्रायुङ्क्त यद्भयाद्भारतरिपवो गौराङ्गपिशाचाः पलायाञ्चक्रिरे। युगसन्धिकाले कराऽऽऽस्मिन् कलिहतके मातृभुवं पारतन्त्र्यनिगडबन्धनान्मोचयितुं लोकाधिकं पराक्रमत्।

श्रीरामभद्रस्य मर्यादां, सुयोधनस्य कूटनीतिं, हर्षवर्धनस्याभ्युदयं, चन्द्रगुप्तस्य पराक्रमं, अशोकस्य धर्मप्रचारभावं, प्रतापस्य रणधीरतां, शिवराजस्य समयानुवर्तनचातुर्य्यम्, रणजीतस्योद्भटयुद्धनैपुण्यं, बालगंगाधरतिलकस्य प्रज्ञाबलं, देवबन्धोर्दासस्यौदार्य्यं, मोतीलालस्य महत्त्वं, लाजपतिराजस्य धैर्यं, जवाहरस्यान्ताराष्ट्रियराजनीतिप्राविण्यं, राजगोपालाचार्यस्यार्थशास्त्रज्ञत्वं, वल्लभबन्धोरनुशासनदक्षतां, राममोहनरायस्य समाजसेवापरायणतां, गोपालकृष्णस्य कर्मठतां दधानोऽयं विज्ञाताखिलजनमनस्तत्त्वभाषः सुभाषो मन्ये राष्ट्रमहापुरुषः सर्वगुणानामेकभूमिरिव प्रोज्ज्वलं दिदीपे। किं बहुना, तैस्तैरुद्भटगुणगणैस्सोऽयं महात्मनो गान्धेरप्यतिरिच्यत इति निर्भ्रान्तं मे मतम्, यतो गान्धिमतमनुसरन्तो जनाः सुभाषस्योदग्रां कार्यप्रणालीं न सेहिरे, तत्परिणामो हि दक्षिणपक्षवामपक्षगामिनीद्विधा नीतिः समुदपद्यत भारतराष्ट्रमहासभायाम्, किन्त्वस्माकमस्माकं चरितनायको लोकनायकः सुभाषचन्द्रो विदेशस्थोऽपि स्वतन्त्रभारतसेनासंयोजनस्य महत्यप्यवसरे गान्धेश्चरित्रचित्रपूजां विदधत्तं प्रति श्रद्धाविश्वासपूर्वकं स्वात्मनो भक्तिभावमदर्शयत्। एवमयमजातशत्रुर्महामनास्तरुणोऽपि ज्ञानवृद्धो महात्मा सुभाषः।

यदा विश्वस्मिन् सर्वराष्ट्राणि विज्ञानास्त्रशस्त्रसेनाबलैर्भौतिकीं सम्पदमायत्तीकर्तुं परस्परं स्पर्धमानानि विध्वंसलीलाताण्डवं कुर्वन्ति मात्स्यन्यायं चरितार्थयन्ति स्म, यदा च शर्मण्यदेशीयै राक्षसप्रायैर्दुर्धर्षमदोत्कटैः फ्रांसबेल्जियमहॉलैण्डरूसब्रिटिशप्रभृतीनि राष्ट्राणि मर्दितान्यासन्, यदा रणदुर्मदा अपि विज्ञानबलसम्पन्ना अपि राजशक्तयो जले स्थले च समन्तात्समधिकं पीड्यमाना बभूवन्, एवंविधेऽदृष्टश्रुतपूर्वेस्मिन् हाहाकारैककरुणक्रन्दनमये समये शताब्दीर्यावत् पारतन्त्र्यशृङ्खलाबद्धस्य भारतदेशस्यास्माकं मुक्तये

प्रयत्तमानः सुभाषवीर एव विजयवैजयन्तीं दिग्दिगन्तेष्वस्फुरयत् स्वदेशगौरवजयदुन्दुभिघोषं चाघोषयत् । न मात्सर्यान्न च कपटप्रबन्धोपलम्भनेनापि तु स्वदेशस्वातन्त्र्यार्थमेव केवलं यो हि कोपदहनज्वालाकरालमुखो गान्धेरहिंसामतं नपुंसकत्वमिति दक्षिणपक्षमवमत्य स्वीयं वामपक्षमेव शुभोदर्कमङ्गीचकार, येन हि प्रगतिगामिदलनिर्माणं विधाय स्वभुजदण्डबलादेव स्वतन्त्रभारतचमूसंघटनमरचयत् सोऽयं तरुणभारतहृदयसम्राट् सुभाषचन्द्रो भास्वरं किमपि धाम लोकोत्तरमधत्त ।

विद्यमानेष्वपि कोटिशः शत्रुदलेषु सावधानेष्वपि परपक्षगूढचरयूथे यः स्वदेशात् अकस्मादन्तर्दधे । स किल कूटमनोभेत्ता नेता चास्माकं भारतभुवां दम्भाचार्याणामपि देशद्रोहिणां मनांसि व्यस्मापयत् ।

इदानीन्तना हिटलरमुसोलिनिस्तालिनप्रभृतयः प्रलयङ्कराः सकलसृष्टिसंहारदूता इव रणोद्भटा भटा मित्रराष्ट्राण्यप्येकवारं पराजिग्युस्तैरेव साकं सख्यं स्थापयन् स्वदेशस्वाधीनतामक्षुण्णं रक्षन्नसौ सुभाषो विश्वसुहृत्कस्य नो श्रद्धास्पदं शत्रोर्मित्रस्य वा ?

पुराकालादद्य यावत्संख्यावन्तो वीरा आहवयज्ञवेद्यामात्मनो बलिं दत्व स्वर्लोकं जग्मुस्तत्र च तेऽनेकाभिरप्सरोभिः सह दिव्यान् भोगान्बुभुजुः परमयमद्भुतपराक्रमो वीरकेसरी जीवन् वास्ते मृतो वाभवदित्युभयथापि मित्रशत्रूदासीनेष्वधिकतरं श्रद्धाविश्वासभावमुद्भावयन्नक्षरं यशो लेभ इत्यहो धन्येयमस्योभयलोकसाधनपटीयसी नीतिः । मन्मतेऽष्टमोऽयं चिरजीविषुवीरेष्वन्यतमः । स्वात्मनिगूहनं कुर्वन्नसौ परमहंसवृत्तिरवधूतकल्योऽवितथकृतसङ्कल्यो देशमोक्षाय स्वकर्तव्यव्रतमसिधारारूपं साध्वाचरत्तस्मै महतो महीयसे लोकान्तरिताय लोकजीवनाय सगुणाय निर्गुणायाव्यक्ताय व्यक्ताय वा भारतव्योमचन्द्राय सुभाषचन्द्राय वयं सर्वे मधुरवाणीकुटुंबिनो जनाः शुभावसरेऽस्मिन् सश्रद्धं सबहुमानं साविनयं च सद्भावसुमनोऽञ्जलिमर्पयामः ।

---

# विविधसेवाव्रती सुभाष एव

ले.—पं. श्रीसर्वतंत्रस्वतंत्रा माधवाचार्याः
प्राध्यापकाः भा. वि. भवनं मुंबई.

जानन्ति सर्वे पुरावृत्तविदः— 'सृष्टिकालादारभ्य गतदिनपर्य्यन्तमक्षुण्णमासीद् भारतस्य स्वातन्त्र्यम्' विश्ववन्द्या च श्रर्णाश्रमधर्मरूपी सभ्यता व्यतानीत्सर्वतो भद्रं सर्वत्र ।

अनेनैव वृद्धभारतेन मोहनिद्रानिमग्नेभ्यो वन्यपशुप्रायेभ्योऽखिलेभ्यो विश्वजनेभ्यो मानवता संदेशः श्रावितः । इत एव सर्वे मनुष्याः कर्तव्याकर्तव्यज्ञानं प्राप्ता व्यवहरन् निष्पापं लौकिकव्यवहारम् ।

तदानीं ते सर्वे जना जनपदानि च वर्णाश्रमधर्मेण भारतमर्यादया च व्याप्ता य इदानीमनुसरन्ति मोदं भद्रम् ।

समय एव करोति बलाऽबलम्—गतः स उन्नतिदिष्टोऽदृष्टात् सम्प्राप्तोऽवनतिकालः कलेःप्रभावात्—पारस्परिकविद्वेषप्रदत्तावकाशै र्वन्यपशुसदृशैरन्ततो गत्वाऽऽक्रान्तो भारतः, आच्छादितौ च धर्मसमाजौ ।

यद्यपि भारतमर्यादावर्तिनो बहवो देशा मोहं मदीयैर्मोहम्मदीयीकृता इदानीं स्वपूर्वजानां नामापि न जानन्ति सभ्यतायाः । तथाऽपि भारतीयधर्मपरिवर्तनप्रयत्ने विनष्टा तेषां सर्वतोमुखी वर्चस्विता ।

समायास्यति सोऽपि कालो न चिराद् यस्मिन् विहाय भ्रान्तिमागमिष्यन्ति मोहम्मदीया अपि स्वादिपुरुषसेविते बलादपहारिते स्वकीये । आर्य धर्मे । भ्रान्त्या सह मोहम्मदीयत्वमपि परित्यक्तं भविष्यति ।

अधुना तु देशधर्मसमाजभावनासु सर्वत्र सनातनीयाः स्वस्य त्रातारमन्विष्यन्ति परिपश्यंति च स्वनेतारं पारं गमयितारं च दुःखानाम् ।

मदीया दृष्टिरपि भीतभीता मृगीव व्याकुला पश्यति दिशिदिशि भारतस्य स्वातन्त्र्ये प्रयतितारं शमयितारं च सर्वदुःखानाम् ।

यदा तु सुभाभिर्भासयन्तं समस्तभूमण्डलम् सुभाषचन्द्रं स्मृत्वा स्वमानसे, अपश्यमन्यान् नेतृवेषधारिणो जनान्, तदा तेषां स्वार्थावारितस्य मुखस्य न व्यभात्काऽपि प्रभा मदीयदृष्टिपथे ।

सन्यासभावनाभावितहृदया त्यागिन एव अगृहीत्वाऽपि विधिविहितो त्यागसरणिं सर्वदा सर्वेषु विषयेष्विति सत्यम् । ईश्वरेऽपि येषां विरतिं निवृत्ता अपि गुरुजनाऽनुशासनात् नात्यजन् हार्दिकं वैराग्यं गृहेष्वपि स्थिता ।

अत्रेदं तु कदाचिदपि न विस्मर्तव्यमस्माभिरपि यद् वर्तमानशासनाभासाः प्रसाध साम्राज्ञीं पुरा भारतमभिन्यविशन्तः, लाभं लब्ध्वा चास्माकीनान्तर्विद्वेषस्य विहाय व्यापारिरूपं सम्पन्नाः शासकाः क्रमशः ।

यद्यपि अन्यैः 'पोर्तुगीज' प्रभृतिभिराक्रमणकारिभिः रुद्भाविताऽत्र भोजनभक्तिः, विनाशिता भारतीयवृत्तिः । ...नि... च प्रान्तीयता । तथाऽपि तैर्न लाभो लब्धः स्वप्रयासानाम्, तदीयाः सर्वे प्रयत्नाः फलिता आंग्लेभ्यएव ।

एतेषां शासनरूपधारिणा शोषणेन देशधर्मसमाजानां यदहितमनायासादेव समासादितं तन्नापारयन् कर्तुं वर्षसहस्रेणाऽपि मोहम्मदीयाः स्वच्छन्देन विहरन्तोऽपि भारते वर्षे ।

यद्यपि नाऽभूत् स्वातन्त्र्यजन्यं यशस्वि भारतीयजनानां भाग्यवशात् सन् १८ इस्वत्र, तथाऽपि अनुभूय असिधारानन्दमेतद्देशीयानां धर्मसमाज-विषये विरताः पाश्चात्या बलप्रयोगतः ।

तत्स्वातन्त्र्ययुद्धस्य योद्धारोऽपि प्रसन्नेन मनसा इतस्ततो विजने प्रविष्टाः, हस्तंगतेनाऽपि तात्याटोपीपदवाच्येन सेनापतिना नासारि सन्धिर्न स्वीकृता च दासता, चुम्बितश्च मृत्युपाशो हर्षेण ।

एतेषां परम्परा वर्तत इदानीमपि, इष्यूयते च समये समये देशधर्म-

समाजसेवायां सर्वस्वं समर्पयंति । विप्लविनो न कारागारवासवीरा न च सर्वात्मभावेन विप्लविन एव प्रयतन्ते भारतमुद्धर्तुं पाश्चात्येभ्य इत्यमन्यन्त श्रीसुभाषचन्द्रबोषाः। अत एव एतेषामेष्वेव पक्षपातोऽभूत् सर्वतोऽधिकः, प्रादर्शयंश्च देशबन्धुसमये क्रांतिकारिषु— अनन्यां स्वभाक्तिम् ।

यद्यपि सन्तीदानीमपि बहवो विख्यातनामानो राशियामभासम्भवाः, ये याचनात् स्वातन्त्र्यप्राप्तिर्भविष्यतीति मन्यन्ते । एतावदपि न अपितु याचन्ते च विविधप्रकारेण ।

किन्तु श्रीसुभाषचन्द्रमहोदयानां तु हृदयेऽयमेव विश्वास आसीद् यत्स्वातन्त्र्यसमं वस्तु याचनान्न प्राप्यते नैव च भिक्षायां दीयते । परसम्पत्तिलुब्धो घनं बलं वा परदेशी च्छलसहिताद् बलात् परचक्रं संक्रामयन् सांक्रामकरोग इव परदेशे प्रसरति कारीरघातुरिव प्रदेशस्य सर्वस्वं शोषयति ।

यदि च पीडिताः प्रबुद्धाः कालानुकूल्यं प्राप्य ससाधनाः संगठितास्तेभ्योऽपि प्रबला जाता स्तदैव युद्धं दत्वा समुत्सारयन्ति परदेशीयान् पलायन्ते च मृत्युभयभीताः पाश्चात्याः स्वदेशं प्रति । अन्यथा विदेशीयकुचक्रात् स्वातत्र्यं सर्वथा चाशक्यम् ।

अत एव गतमहायुद्धं परतंत्रदेशानां स्वातन्त्र्यार्थं कृपया परमात्मना प्रदत्तम्, अस्मात्समयाल्लाभोलब्धव्य इति विचार्य्य विप्लववादिदलसहायाः स्वदेशं परित्यज्य तं वीरदेशं गता ह्येते गुप्तवेषेण, भयाद् दिशो न व्यजानन्त आंग्लाः ।

विदेशेषु यत्र यत्र एते गता यैश्च संगतास्ते सर्वे एतेषां पवित्राच्चरित्राद् अलौकिकात् त्यागाद् भगवत्याराधनप्राप्तापूर्वप्रभावात्प्रभाविताः । कठिनेष्वपिस्थलेषु एतयैव सामग्र्या सुरक्षिता आसन् । सत्ययातिमहात्मानः सर्वत्र स्वतेजसैव रक्ष्यन्ते । भारतीयानां हृदयसम्राजा तदीयचित्तसम्वादभाजा अनेन भारतमुद्धर्तुं सैनिकाः संपादिताः शिक्षिताश्च विदेशस्थैर्धनिभिर्व्यापारिभिर्भारतीयैरपरिमितं धनं प्रदत्तम्, युवानो युवतयश्च स्वेच्छाया सेनायां समुदिताः । एतेषां सैन्यसंयोगप्रार्थिनश्च स्वेच्छासेवका अपूरयन् प्रतिज्ञापत्राणि स्वरक्ताक्षरैः ।

आंग्लसेनापतीनामांग्लसैनिकेषु पक्षपातपूर्णव्यवहाराः सार्वजनीनाः सन्ति, गतमहायुद्धेऽपि अवरुद्धानामांग्लानां परित्राणाय यतमाना एते सेनापतयस्तत्रैव विसृज्य भारतीयसैनिकान् गृहीत्वा च स्वदेशीयान् पलायन्तः परपक्षदयाजीविनो भारतीयाः सैनिकाश्च सुभाषभाग्येन प्रवृद्धा स्वतंत्रसैनायाः सैनिकाः संजाताः ।

स्वातन्त्र्यभावनोत्तराङ्गितैषा विशालवाहिनी समुद्रवेलेव सिंहपुरान्निर्गत्य आक्रम्य च ग्रामाद् ग्रामान्तरं वनाऽद्वनान्तरमागच्छन्मणीपुरराज्यं । पराजित्य च आंग्लपक्षीयान् स्वपौरुषं प्रादर्शयन् । कदाऽपि न विस्मरिष्यन्त्यांग्लाः सुभाषासिभाचमत्कारम् ।

भारतस्य भाग्यवशाच्च नालिंगद् विजयलक्ष्मीः परमपवित्रं श्रीसुभाषकण्ठं तथाऽपि तेषां स्वातन्त्र्ययुद्धं तु समुच्छिद्य भारतनिगूढं विश्रांतिमेष्यति नात्र काऽपि शङ्का ।

पाश्चात्यसंसर्गशिक्षाप्रभावान्वितपदं प्राप्तैरनेकैर्धारासभासभ्यैरार्य्यसभ्यतासमुच्छेद एव गृहीतनीत्रासयो न तु आंग्लोत्सारणे । भारताक्रमणसमये यदत्रकर्तुमैच्छन् विदेशीया स्तत्संपादनेच प्राप्तस्वातन्त्र्याः । युद्धस्य नामतोऽपि बिभ्यति पाश्चात्यैः सह युद्धस्य वार्ताऽपि दूरं गता ।

आर्य्यसभ्यतामुद्धर्तुमनार्यानांग्लांश्चेतो दूरेकर्तुं भारतेच स्वात्मभावे स्थापयितुं चिरं जीवन्तु सुभाषाःस्वभासा भासयन्तोऽखिलं विश्वमिति सदा आशास्महे ॐ शान्तिः शान्तिः शान्तिः ।

———

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रत्याङ्ग्लमासप्रथमसप्ताहे प्रकाश्यते

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकः प्रबन्धः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन्। ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन्।

(३) पत्रिकाया अस्याः आङ्ग्लवार्षिकं मूल्यं मार्गव्ययसहितं रूपकचतुष्टयम्। अङ्कस्यैकस्याणकचतुष्कं मूल्यम्। द्वीपान्तरवासिनां तु वार्षिकं मूल्यं षड्रूप्यात्मकम्। विना मूल्यमादर्शपत्रिका न प्रदीयेत। तदिच्छुभिश्च चतुराणकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम्।

(४) मधुरवाण्याः श्रेयोभिवृद्धये पञ्चरूपकाणां दातारः सहायकाः दशरूपकदायिनः पोषकाः, पञ्चविंशतिरूपकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्ता संरक्षका इति व्यपदिश्येरन्।

(५) मधुरवाण्यां नीरसा अस्पष्टाक्षरा एकपार्श्वे एवालिखिता लेखाः नावसरमासादयेयुः। लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु सम्पादकाः। अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन्।

(६) लेखा, विज्ञापनानि, समालोचनापेक्षिणो ग्रन्थाः, पत्रिकाश्चेत्यादि सकलं मधुरवाणी कार्यालय बेळगांव नं १६९८ इति संकेतेन प्रेष्यम्।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम्। भूतपूर्वग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव विस्मरणीयम्। उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः।

**प्राप्तिस्थानम्**

**मधुरवाणी कार्यालय, १६९८ बेळगांव.**

Printed at Veer-bharat Printing Press, Belgaum, by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698 Belgaum.

